# रुक्मिणीहरणम्

——— ०*० ———


महामहोपाध्याय

श्रीयुक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्य

प्रणीतम् ।


——— • • ———


कलिकाता ४१ संख्यकसूरिवर्त्मस्थ

सिद्धान्तविद्यालयात्

श्रीहेमचन्द्रभट्टाचार्य्येण

प्रकाशितम् ।

मूल्यं १॥० सार्द्धैकरूप्यकम् ।

# रुक्मिणीहरणम् ।

## प्रथमः सर्गः

——००( * )००——

शिवः शिवापदतलगः शवोऽपि सन्
भवन्महाम्बरमपि यो निरम्बरः ।
रमार्द्धभाक्तनुरपि मारमारकः
स वो भवो भवतु विभुर्विभूतिदः ॥ १ ॥

समन्ततो विपथरतैर्ललामनि
प्रथीयसि प्रथितविदर्भनामनि ।
परान् परं किल विषये विभीषयन्
स भीष्मकः समिति बभूव भूपतिः ॥ २ ॥

महाकविः सकलसवर्णयोजने
सुतो रवेरविनयदण्डधारणे ।
क्षमाभृतो क्षितिभृदशेषसत्त्ववान्
मनस्विभिः कृतिमननैरमानि यः ॥ ३ ॥

कलावतः सकलजनप्रमोदिनः
सितात्मनोऽप्यमृतकरस्य यस्य च ।
कलङ्किनीं किल परिचायिनीं तनो-
र्विधोर्विधां ननु विदधौ पटुर्विधिः ॥ ४ ॥

तमोऽपहं प्रतिदिननूतनोदयं
धराधरोपह्नितसहस्रधाकरम् ।
दिने दिने दिनमणिमस्तगामिनम्
अनस्तगं यमपि जनाः स्म जानते ॥ ५ ॥

शिवान्वितं शशिविशदोत्तमाङ्गकं
त्रिलोचनं परिगतशास्त्रलोचनैः ।
निरीक्ष्य यं नियतमनुष्यविग्रहं
जनो मनो हरविषयं न्यवीवृतत् ॥ ६ ॥

श्रियाश्रितः सकलतनौ तनूनपा-
न्महामहा बहुतरचक्रधारकः ।
उरःस्थले परिलसदेककश्रियं
जहास यो मधुरिपुमेकचक्रकम् ॥ ७ ॥

रणोद्यमे धरणिविकम्पसंशयात्
हुलुध्वनिं प्रथममदुश्च यस्य याः ।
अनन्तरं हृदयमपि प्रकम्पितं
विलोक्य ता रिपुवनिता वितत्रसुः ॥ ८ ॥

द्विषत्त्वमूं प्रति गतिमात्रतोऽपि यो
जयश्रियं प्रथममशिश्रियन्मृधात् ।
उषामसौ पुरत उपैत्यहर्पतिः
परं ततस्तिमिरततिं हिनस्ति हि ॥ ८ ॥

उरःस्थलस्थितकमलास्थमत्सरात्
सरस्वती शुचिरसनास्मना सती ।
यदीयके यशसि मनस्यनारतं
कचिच्छलादपि हसितं विदिद्युते ॥ १० ॥

निरन्तरं दिशि दिशि गायतां सतां
मुखाब्लिकापरिणतिचिह्नचिह्नितम् ।
सुधाम्बुधेर्जलविमलञ्च यद्यशः
जगज्जनाः शशधरमेव मेनिरे ॥ ११ ॥

द्विवर्णभाग् यदि च यशो जगत्पतेः
तथाप्यभूद्बहुतरवर्णसंयुतम् ।
समैरिरत् प्रतिवनितागतेर्धरया
तटान्तरे चितिरपि कीर्त्तिमम्बुधेः ॥ १२ ॥

शरीरिणां सहभवदूषणानि षड्
जितेन्द्रिये यमवति तत्र राजनि ।
महाज्वरे विकृतिमतो महौषधे
विषाणि वा परमगुणानजीजनन् ॥ १३ ॥

धनान्यसावचकमतार्थिसात्कृतौ
रिपौ रुषः सुकृतकृतौ च लोभवान् ।
मुमोह दुर्वचसि च सत्कथोन्मदः
समत्सरोऽभवदखिलान् खलान् प्रति ॥ १४ ॥

द्विधा पदं नहि तनुते निशीथिनो
न विद्यते द्युमणिभवा निशि द्युतिः ।
खगोचरे विचरति नैव कोऽपि सः
तदात्र काव्यजनि न दुर्जनक्रिया ॥ १५ ॥

न केवलं किन्तु कलया पृथक् पृथक्
दिगीश्वरा निर्वृतिमुपागताः श्रियः ।
अपालयन्नवनिपतिः कलेवरं
शशास यद्वद् दिश एक एव सः ॥ १६ ॥

विकर्त्तनो महसि, मुखे शशी, कृती
स मङ्गलो, मनसि बुधो, गुरुर्गुणे ।
कविर्गिरि द्विषति शनिश्च तस्थिवान्
तथाप्यभून्नृपतिरसौ सुदुर्ग्रहः ॥ १७ ॥

जजन्ति चेन्नहि जलज जले जले
न चेत् क्षितौ फलति फलं वने वने ।
नृपोचितो न खलु तदा तदात्मनि
मदो मनागपि धनसम्भवोऽभवत् ॥ १८ ॥

सवेज्जले ज्वलनभवापि तप्तता
स्वार्पणात् पुनरनलेऽपि शीतता ।
अभून्नृपे सति च विकारकारणे
हृदाशये नहि विकृतिः कियत्यपि ॥ १९ ॥

महीपतौ मनुमनुसृत्य शासति
प्रजां नहि क्वचिदपि दुःखमस्पृशत् ।
विरोचने सति हि चकासति प्रगे
करोति नो जननयनावृतिं तमः ॥ २० ॥

तमःक्रमो निशि, चलता ललनानतौ,
दिवोष्णता, शशिनि कलङ्ककालिमा ।
कलिर्युगे, वचसि विभक्तियोजनम्,
तदाऽभवद्वपुषि च शक्तिधारणम् ॥ २१ ॥

अहर्पतेरहनि करैः प्रफुल्लति
सरोजिनी निशि च पुनर्निमीलति ।
महीपतेर्जगति करैस्तदातनी
प्रजाऽभजत् सततमतीव फुल्लताम् ॥ २२ ॥

नृपो मनोर्वचनमृते न कर्मकृत्
जनः पुनर्नृपवचनं विना च न ।
जनं जहत्यरमत नो रमापि सा
रमां त्यजज्जनमभून्न किञ्चन ॥ २३ ॥

विरूपता वियति, विदूनता दिने,
विलोड़नात् कलुषितता जलाशये ।
पथश्च्युतिर्जलधरदृष्टसम्बरे
विशीर्णताऽवसदपि पापतापयोः ॥ २४ ॥

अवास्थित प्रतिकुसुमं मधुव्रतः
शरासने स्फुटकुसुमं स्मरस्य च ।
स्मरः पुनर्नवनवयौवने नृणां
शतावधौ वयसि च यौवनं तदा ॥ २५ ॥

सरस्वती निखिलनरानुपाययौ
समीरिता जगति तथापि सा सती ।
वदन्ति ये किल कमलाञ्च चञ्चलां
मृषागिरस्त इति जगुर्धनेश्वराः ॥ २६ ॥

नयादृते क्रियदयनं बभूव नो
प्रजान्तरे न च विनयं विना प्रथा ।
रणाङ्गने न, न भवने गदाश्रयः
सदागमादभवदलं मुदागमः ॥ २७ ॥

इतीदृशैरखिलसुखैरखण्डितैः
धरेशितुर्भुवनतले बभूव सा ।
स्वलन्तुला किल नगरी गरीयसी
ध्रुवे भवेत् क्व न सति कारणे क्रिया ॥ २८ ॥

'स यौवने युगपदभुङ्क्तदुन्नतां
वसुन्धरां विदुषितरां वधूमपि ।
तदादिमाऽनवरतयोग्यलालनात्
प्रजावती भवतितरां स्म, नापरा ॥ २९ ॥

निशासमा प्रहरसमान् प्रसूय सा
महीपतेरथ सुषमान् सुतान् प्रिया ।
उषासमामधृत सुतां निजान्तरे
शुभाद्विधेर्विशदरुचोविरोचिनी ॥ ३० ॥

सितद्युतिः शिशुशशिचन्द्रिकान्तरा
नभःप्रभा प्रविरलतारकेव सा ।
विलोकयन्मनुजमनोविनोदिनी
सुतोदरा परिमितभूषणा बभौ ॥ ३१ ॥

दधाति या धरणिमिमां सदैव, सा
स्वयं हि यज्जठरमविन्ददिन्दिरा ।
पदे पदे स्खलितपदालसा च सा
नृपाङ्गना न गुरुतराऽभवत् कथम् ॥ ३२ ॥

प प्रिया वपुरपुषन्मनोहरं
दिने दिने किल कमलालयाश्रितम् ।
'दीपभृत् सुविमलकाचमोचिका
तनोत्यलं रुचिररुचिं हि सर्वतः ॥ ३३ ॥

दिने दिने नृपवनितातनुश्रिया
नृपस्य च प्रमदविशेषधारया ।
प्रजागणोन्नतिसुखशान्तिसम्पदा
सखीमुदा सह च स गर्भ एधत ॥ ३४ ॥

वयस्यया कृतवरिवस्यया चिरं
महीभृता प्रणयभृता च सम्भृताः ।
मदप्रदा बहुविधदोहदाः सदा
तदन्तिकं स्म परिहरन्ति नेप्सिताः ॥ ३५ ॥

न केवलं नृपनगरे जनेप्सिता
हरिप्रिया चिरमचलाऽभवत् स्वयम् ।
श्रितोदरा समुपचिताकृतिः क्रमात्
भृशाचलामपि जननीमजीजनत् ॥३६॥

अभूदथ प्रसवजवेदनोदये
महामहो गणकगणस्तथोन्मुखः ।
वसूपमो वसुपरिवर्षणोद्यतः
प्रतिग्रहग्रहिलजनोऽपुरपस्थितः ॥ ३७ ॥

प्रसूदरं सुरविषयञ्च शून्यताम्
उपाम्बिकाकरमवनीञ्च पूर्णताम् ।
नयन्त्यलं निजजनुषा स्वयं रमा
शुभे दिने समजनि कापि कन्यका ॥ ३८ ॥

अवेदि न प्रसववजवेदनाऽमुया
सखीजनैर्जनितविनोदसान्त्वया ।
अयाति यत्कृतकरुणाकणादपि
व्यथा, ततः कथमथवा व्यथाकथा ॥ ३८ ॥

विराचिनीमथ विरचय्य मण्डलीं
क्षणात् क्वणज्जयितत्रिपादमण्डलीम् ।
प्रचक्रिरे करतलगण्डमण्डलाः
कलुध्वनिं बहुलविलासिनीजनाः ॥ ४० ॥

अथो मिथः कतिपयकिङ्करीजनाः
नृपान्तिके विरुरुधुरग्रतो गतौ ।
इतोऽन्तरे चतुरतरा च काचन
प्रपप्रथे त्वरितगतोत्सुकन्तु तम् ॥ ४१ ॥

तथापि सा स्वजनसमानभागतः
महीपतेरलभत पारितोषिकम् ।
न कारणे सति च विवेकदृश्वनः
मनस्विनस्खलति मतिः कदाचन ॥ ४२ ॥

पदे पदे वसु ववृषुर्जगुर्जनाः
प्रदध्वनुः परिननृतुः समुन्मदाः ।
सुतैकिका बहुषु सुतेषु तिष्ठतां
गृहाश्रमे मुदमधिकां ददाति हि ॥ ४३ ॥

धृतोऽम्बया निववृत एककोऽर्भकः
परोऽस्पृशल्लघुगति सूतिकागृहम् ।
तमङ्गना स्नपितवती जलस्रवैः
समस्खलत् परमपरस्य तज्जले ॥ ४४ ॥

प्रभाचणा विरतनिमेषलोचनाः
विनिश्चला बहुतरवामलोचनाः ।
दिदृक्षवः श्रिशुकृतकर्षणांशुकाः
चकाशिरे विततविभूषणांशुकाः ॥ ४५ ॥

चकासतो सितकृतदीपभान्तरे
सुतात्मना समवतरन्त्यपि स्वयम् ।
हरिप्रिया स्तिमितपयःपयोनिधेः
तदोदरे वसतिमिवाकरोन्निशि ॥ ४६ ॥

यदोः कुलं परमहसज्जगच्च यत्
तदेव किं विधुकिरणच्छलाद्वभौ ।
मनोऽदुनोद् यदपि च चेदिभूपतेः
तदेव च स्फुटमभवद्गुहातमः ॥ ४७ ॥

स्वया भया मृदुतरया प्रभूतया
खरां क्षपामजयदसौ प्रदीपभाम् ।
तदव भावलिरिव चन्द्रिकान्तरे
विलीनतामगमदलं तदावली ॥ ४८ ॥

दरिद्रता प्रबलतमापि पूर्वजा
मरिष्यति ध्रुवमचिरादितीव सा ।
उपप्रसूकरयुगलात् प्रसूकरौ
निमीलितेक्षणयुगलं गतारुदत् ॥ ४९ ॥

तया कृतादपि मुमुदे प्ररोदनात्
अपि स्मितात् सपदि बभूव विस्मितम् ।
कटाक्षणादपि च धृतिं मुदाऽधृत
प्रसूप्रभृत्युपगतलोकमानसम् ॥ ५० ॥

दयेक्षणात् मम्मवति या प्रजाव्रजं
तदा तु तां परमवितुं पुरन्ध्रयः ।
महौषधिव्रततितिप्रबन्धनैः
विवेष्टिरे तृणकृतसूतिकागृहम् ॥ ५१ ॥

तदङ्कके समुदितशैत्यशान्तये
यदा जनो ज्वलनमजिज्वलद्गृहे ।
तदा तयोर्मिलितसुवर्णभायुगं
पृथक्तया न खलु बुधोऽप्यबुध्यत ॥ ५२ ॥

हिमैरिवाम्बुजकलिकां निशीथिनी
विधोः कलां प्रकृतिरिवामृतद्रवैः ।
असिस्नपद्धिमलकवोष्णवारिभिः
करस्थितां मृदु मृदु कापि कामिनी ॥ ५३ ॥

जनार्द्दनप्रियमहिला न निर्द्दया
जनान् बहून् समुपगता न चासती ।
सरस्वतीप्रतिवनिता न वाग्मिनी
चिरन्तनी न परिचिता च साऽभवत् ॥ ५४ ॥

अथात्मनाङ्कुदितमना महीपतिः
स्मितश्रिया धवलितलोहिताधरः ।
फलान्वितं करमनु रुक्मसागतः
वितीर्य्य सोऽधिकतरमोदमग्रहीत् ॥ ५५ ॥

सुसम्भृतैः सपदि पुरः पुरोधसा
क्षितीश्वरो व्यधित च जातकर्म्म सः ।
ततः सुता कनकलतेव मार्जनात्
महीयसीं रुचिररुचिं दधौ च सा ॥ ५६ ॥

अथ निजजननाङ्करुक्मरूपीकृतत्वात्
तदधिपतिसुतानां रुक्मयोगाच्च नाम्नाम् ।
गहनदहनरोचीरुक्मसावर्ण्यतो वा
समलभत सुता सा रुक्मिणीनाम नाम ॥ ५७ ॥

प्रातः पयोभिरधिकं परिपूयमानं
सन्ध्यां भजद्भिरुदघर्म्मि जपाय योग्यम् ।
दर्शेन भीतिजनकं वदने क्रमेण
तस्या द्विजद्वयमुदित्य परं रराज ॥ ५८ ॥

साक्षादियं किल रमापि धरावतीर्णा
बाल्यादिभावमुदभावयदात्मनीनम् ।
नारी सुरीमभिनिनीषुरुपेत्य रङ्गं
सर्वं करोत्यभिनयं हि तदीयमेव ॥ ५८ ॥

कीरालापे पिककलरवे किञ्च वीणाङ्गिनादे
श्रद्धामद्धा न खलु पुपुषुः कण्ठमस्याः शृणन्तः ।
हास्यज्वालं द्विगुणितसितं कुन्ददन्तप्रभाभिः
संपश्यन्तो ददृशुरपि नो कौमुदीं मोदयन्तीम् ॥ ६० ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिणीसम्भवो नाम प्रथमः सर्गः ॥ ० ॥



# द्वितीयः सर्गः ।

——०(०)०——

अथातिलोला वितनोति बाला
लावण्यलीलाललिता स्म खेलाम् ।
पश्यञ्जनान् सैव चमच्चकार
स्वभावरम्यो हि शिशुस्वभावः ॥ १ ॥

अङ्कान्तरोत्तानशयां विधाय
यदा पयः पाययितुं प्रसूतिः ।
निनाय भाण्डं तदभावकाण्डे
स्वपाणिकम्पं न विलुम्पति स्म ॥ २ ॥

पानाय नीतं नवनीतकस्य
करं मुखेऽस्या दशनैर्दशन्त्याः ।
विलोक्य वक्त्रं शुचि हासशोचिः
ववर्ज्ज मा तर्ज्जनमार्त्तिजन्यम् ॥ ३ ॥

घटादि धात्रीनिहितं हितार्थं
यदा सकाशाज्जननी निनाय ।
ययौ हसन्त्या सहसा विशङ्कं
प्रसारिपाणेरुपमातुरङ्कम् ॥ ४ ॥

उत्सङ्गसुप्ता चुचुकं पिबन्ती
स्ववक्त्रचुम्बार्थमधःकृते सा ।
चपेटपातैरपि तत्कपोले
धिनोति धन्यां जननीं स्म कन्या ॥ ५ ॥

यदा च धात्री नहि सन्निधात्री
तदा सलोलं सलिलं निपात्य ।
मृदुन्यथाङ्के मृदि तद्विमृद्य
करेण दक्षेण लिलेप दक्षा ॥ ६ ॥

द्वे जानुनी जातु निधाय यान्ती
भुवस्तले हस्तसरोरुहे च ।
अनुतुषस्थामनुसञ्चरन्तीं
सुपेशलं कौशलमेव काले ॥ ७ ॥

अथ स्वतः सम्भविना विनैव
शिक्षां क्रमेण ध्वनिना बभूव ।
मनोज्ञवाणी शुचिशोभमाना
प्राणोपमाना निजसेवकानाम् ॥ ८ ॥

धन्याभिरन्याभिरनन्यभाभिः
कन्याभिराकीर्णमला मिलित्वा ।
जालायितं भूतलधूलिजालं
चिक्रीड बाला चिकुरे किरन्ती ॥ ९ ॥

सुभाजने भोजनवस्तु किञ्चित्
सञ्चित्य माता स्म यदोज्झतेऽन्यत् ।
द्राक् पाणिना पल्लवितेन चक्रे
तत्प्रोञ्छनं वाञ्छितदर्शना सा ॥ १० ॥

जडं प्रदेहीति जनन्यमुष्याः
सम्प्रार्थनार्थावगमे समर्था ।
अन्यत्तु किं वस्तु समिच्छतीति
बुद्धा जडोऽभूदजडोऽपि बोद्धुम् ॥ ११ ॥

कन्यास्वथान्यां प्रति दानमेषा
तदिष्टमिष्टं ददती स्निग्धैः ।
यादृक्स्वभावा हि परे भवेयुः
तद्योग्यखेलाय जलन्ति बालाः ॥ १२ ॥

सा मातृदत्तं वसनं वसाना
विस्मेरवक्त्रा हसिताऽमाना ।
तद्दर्शयामास सखीं कराभ्यां
पश्यज्जनात्यन्तसुखाकराभ्याम् ॥ १३ ॥

युज्यस्व बाले ! घनवालुकानां
पुञ्जेऽत्र मञ्जं कथयामि तत्त्वाम् ।
कन्याऽसकौ केनचनेत्थमुक्ता
मुक्ताऽङ्ककं तत्र हठादुदस्थात् ॥ १४ ॥

इयं सपत्नी मम भाविनीति
नीतिश्रिता चेत् पुरतोऽग्रहीष्यत् ।
तदा तु तस्या रसनां वयस्या-
भावान्न वाणी क्वचिदाश्रयिष्यत् ॥ १५ ॥

प्रसाधिका भूरिपदस्य साधु
स्वकर्म्मसूत्रेण जगज्जनानाम् ।
इयं यथार्था प्रकृति: किलेति
तस्या: पर: प्रत्यय एव जात: ॥ १६ ॥

श्रिया स्वया श्रीरियमेव कन्या
मायिप्रियेणेद्दशमन्वमायि ।
तथापि चित्रं न बुधोऽप्यबोधि
साध्याविशेषाख्यविशेषदोषम् ॥ १७ ॥

क्रियागुणद्रव्यवती समस्त-
लोकेन या खेलति सर्वदैव ।
तयैव कौतूहलवान् समस्त-
लोकस्तदानीं खलु खेलति स्म ॥ १८ ॥

कलङ्कहीना हरिणाङ्करेखा
सुवर्णवर्णा सवितु: सवर्णा ।
पुराणनिर्णीततनुर्नवीना
सा नन्दिनी बाल्यसुखैरनन्दत् ॥ १९ ॥

रुक्मादिभिः पञ्चभिरन्वितश्रीः
सहोदरैः सा सह राजकन्या ।
अङ्गैर्यथा भूपतिनीतिविद्या
विद्योतते स्माथ समस्तहृद्या ॥ २० ॥

रुक्मादयः पञ्च सहोदराश्च
तां रुक्मिणीं सारतरां स्वसारम् ।
स्कन्धा यथा बुद्धनिबद्धविद्यां
तथाऽनुजग्मुः प्रणयात् सदैव ॥ २१ ॥

पैशुन्यशून्यं कृतपुण्यजन्यं
नैपुण्यपूर्णं चरितं सुतानाम् ।
स लोकनाथो ववृधे विलोक्य
चन्द्रोदयोत्ताल इवोर्म्मिमालः ॥ २२ ॥

ततः शिशून् शिक्षयितुं समग्रान्
समग्रवर्त्ती क्षितिरक्षितानाम् ।
शास्त्रागमाभीष्टान्ययतिष्ट शिष्ट-
प्रधानभूतः किल भूतलेन्द्रः ॥ २३ ॥

स दक्षिणात्मा दिशि दक्षिणस्यां
स्वस्याः पुरो नव्यपुरञ्च काञ्चित् ।
मनोऽनुरूपां प्रकृताभिरूपां
विनिर्म्ममे मर्म्मविदः पुरीणाम् ॥ २४ ॥

विद्यासमारम्भदिनेऽथ तेषाम्
एकेऽप्यनेके गुरवः समीयुः ।
एकोऽभवत्तत्र च वासरेभ्यः
बभूवुरध्यापनकारिणोऽन्ये ॥ २५ ॥

चातुर्य्यगाम्भीर्य्यगुणे धुरीणाः
शिक्षापरीक्षाधिगमेऽनवीनाः ।
दिवस्पतेः प्रत्यपदेशदक्षम्
अध्यापका गोष्पतिमन्वकार्षुः ॥ २६ ॥

स्वरानुदात्तप्रभृतीन् प्रकाश्य
ध्यायन्नुपाध्यायवरः स्फुटार्थम् ।
प्रभातकाले किल तान् कुमारान्
अध्यापिपद्वेदगणं गुणाढ्यान् ॥ २७ ॥

सप्रत्ययं सप्रकृतिप्रयोगं
विभक्तियुक्तं पुरुषान्वितञ्च ।
गुणाश्रितं वृद्धियुतञ्च पेठुः
सांख्योपमं व्याकरणं कुमाराः ॥ २८ ॥

अद्वैतमानन्दमुदाहरन्तीं
निवेदयन्तीं रसमुख्यताञ्च ।
शिशिक्षिरे विभ्रमवत् प्रपञ्चां
वेदान्तविद्यामिव काव्यविद्याम् ॥ २९ ॥

हितोपदेशे सततप्रवृत्तां
पानाशनादौ विहितव्यवस्थाम् ।
धर्मञ्च नीतिञ्च निदर्शयन्तीम्
अम्बामिवामी जगृहुः स्मृतिञ्च ॥ २० ॥

अङ्गानि तेऽन्यानि च दर्शनानि
नैपुण्यवन्तः समधीतवन्तः ।
प्राप्य स्वतन्त्रो न महामनीषां
मनीषिताया विरमन्त्यधीतेः ॥ २१ ॥

चिरोपकारे विहितप्रयत्नां
स्वातिक्रमादैहिकहानिहेतुम् ।
स्वमारमेते गुरुतोऽग्रजाताम्
अनुप्रयाता इव नीतिविद्याम् ॥ २२ ॥

विधौ रणानां सुविधाविधायी
प्रवीणवीरोऽप्यपरः परघ्नः ।
कालेऽनुकूले किल तान् समेतान्
शिक्षां धनुर्वेदगतामदिक्षत् ॥ २३ ॥

तेषामथो धीरधुरन्धराणां
नवं नवं शीलयताञ्च नित्यम् ।
योद्धा च कश्चित् कृतपूर्वयुद्ध-
शिक्षापरीक्षामकरोत् सुदक्षः ॥ २४ ॥

शस्त्रेषु शास्त्रेषु गुरुप्रदिष्टं
रागं किलाङ्गेषु च दासदत्तम् ।
स्नानाह्निकापूर्त्तिभृतो दधाना
वेलामतीयुश्चतुराश्चतुर्थीम् ॥ २५ ॥

कचेषु कश्चित् परिचर्य्यमाणः
संवाह्यमानश्चरणेऽपरश्च ।
अन्यः समन्तादपि वीज्यमानः
तस्मो विशश्राम गताश्रनायः ॥ २६ ॥

आकर्णयन्तः प्रति षष्ठवेलां
किञ्चित् पुराणं क्रियतीं कलाञ्च ।
विनोद्यमानाः कथकैः कथाभिः
महान्तमानन्दमवाप्तवन्तः ॥ २७ ॥

आकर्ण्य ते भागवतं पुराणं
स्वयञ्च ते ते जनकः स एव ।
सा च प्रसूतिर्भगिनी च सैव
नामानि तान्येव तथा निजानि ॥ २८ ॥

तामम्बिकाया भवने प्रयान्तीं
जहार यामिं यदुनन्दनः सः ।
विज्ञाय तस्मिन्निति हाममित्थं
ततः प्रभृत्येव विदिद्विषुस्तम् ॥ २९ ॥ ( युग्मकम् )

दिनान्तवेलामुपलभ्य सभ्या
मारोपमाना अपि ते कुमाराः ।
स्वभावमित्रैः सह राजपुत्रैः
जन्यं व्यधासुस्त्वलजन्यमिति ॥ ४० ॥ कृत्रिम

उदीर्णवाद्यस्वनपूर्णकर्णां
प्रत्यकृतालप्रतिपादपातम् ।
सज्जा निरीयुर्नृपजा जनौघैः
आरादगाराद्रणभूविभागम् ॥ ४१ ॥

कृतात्मनां श्रेणिकृता भटानां
पताकिनी साऽभ्यपतत् पुरीतः ।
तरङ्गमालेव तरङ्गवत्याः
तरङ्गितास्तीव्रसमीरणेन ॥ ४२ ॥

उरश्छदच्छन्नवपूंषि पुंसां
क्षणं जनस्ताम्रविभां दधन्ति ।
अस्तोन्मुखाताम्रदिवाकरस्य
करस्य मध्ये न च निश्चिकाय ॥ ४३ ॥

ततः परं यां पृतना तनान
श्रेणिद्वयीं स्वाभिमुखीमखिन्ना ।
बभौ तदा सा रणभूनिघाटी-
दन्तीयपङ्क्तिद्वितयीसमाना ॥ ४४ ॥

वीरोत्तमैर्वैरिषु कृत्रिमेषु
प्राहारि नास्त्रं समदर्शि मात्रम् ।
विलोक्य लोकास्तत एव विभ्युः
स्वभावसिद्धं हि भयं मृदूनाम् ॥ ४५ ॥

प्लुतस्वरेणोर्द्ध विकस्वरेण
कश्चित् समाहूय विहाय वाजिम् ।
स्वबाहयुद्धक्कलमापतन्तं
कश्चिन्नरेन्द्राङ्गजमालिलिङ्ग ॥ ४६ ॥

अन्तं समेत्य प्रहरन्तमुच्चैः
निवार्य्य शस्त्रञ्च निवृश्य कश्चित् ।
द्विपेन्द्रपृष्ठादवतीर्य्य तिर्य्यक्
हस्तेन दध्रे कचहस्तमस्य ॥ ४७ ॥

रणोत्तमाधोरणदृश्यमान-
हस्तीन्द्रहस्तात् सहसा निरित्य ।
तं तत्क्षणाद्वक्षसि मुष्टिपीडं
स्वदन्तितुन्दस्य तले विविश्वान् ॥ ४८ ॥

तुङ्गैस्तुरङ्गैर्स्खलयुद्धरङ्गे
माद्यद्भिरङ्गांडपुलायिताद्यैः ।
सुवद्भिरप्यस्य रणस्य लक्ष्मीं
लक्ष्मीसगर्भैर्नियतं बुभूवे ॥ ४९ ॥

सुपारदृश्वाऽप्यतिधावतोऽश्वात्
पतन् निषादो व्यथितः स्वयश्च ।
तदोच्चिणा शिक्षणकारिणोऽश्वैः
अरुन्तुदोद्गर्जनतर्जितश्च ॥ ५० ॥

क्षणं भटौ भ्रमतुरुद्धटाङ्घ्री
उत्प्लुत्य निप्लुत्य गदां दधानौ ।
क्षणं रजः स्वस्वकरे किरन्तौ
भुजाभुजि प्रांशुरवौ व्यधाताम् ॥ ५१ ॥

स्वस्वाभिमुख्यश्रितवीरमुख्याः
अविभ्रमभ्रम्रमवृत्तयोऽसीन् ।
ततः प्रयातेऽप्यरुणे रणाब्धौ
सरोजपुष्पाणि मितान्यपुष्यन् ॥ ५२ ॥

वीरं गुरुं जेतुमजय्यमन्यः
जनो यथेष्टां व्यतनिष्ट चेष्टाम् ।
सा निष्फलाभूच्छिखरे लतेव
श्रेष्ठान् स्वनामैव गुरून् व्यनक्ति ॥ ५३ ॥

असौ धरित्रीपतिपञ्चपुत्री
शिक्षां समासाद्य विशिष्य सद्यः ।
सर्वोत्तमा विग्रहवित्तमाभूत्
निसर्गसिद्धो हि सतां स सर्गः ॥ ५४ ॥

लोके रवौ स्मास्तमिते समस्त:
तेषां प्रशक्तिं विविनक्ति नक्तम् ।
नृपात्मजानान्त्वजनि प्रशंसा
न चन्द्रिका चन्द्रमसं जहाति ॥ ५५ ॥

पतिम्वरा वीरजनैकभोग्या
योग्या रणश्रीस्तरला गुणाढ्या ।
प्रस्वेदविन्दूालिमिषेण कुन्द-
मालां समालम्बयतैतदङ्गे ॥ ५६ ॥

परिश्रमाम्भ: शिशिरे समीरे
तेषां निराकुर्वति सर्वदेहात् ।
दधज्जलार्द्रां पुनरुक्तिदोषं
सञ्चालयन् सेविजनो जगाम ॥ ५७ ॥

उपास्यमाना सकलैरलोभि:
प्रालेयलेशान् जहती प्रसूनात् ।
स्खलत्करा भास्करसम्प्रणाशात्
पितृप्रसूस्तत्र बभूव लीना ॥ ५८ ॥

स्वरप्रवीणा अपि हीनवीणा
जगुर्नवीना युगपद् यदेति ।
बभूव कोलाहलिकोकिलाली
व्यालीकगाना प्रकृतेन तेन ॥ ५९ ॥

अनेन रूपेण कुमारवर्गः
विद्यां गृहीत्वा गुरुवृन्दतः सः ।
आहुतिमासाद्य मखे शिखीव
राजप्रयुक्तः सुतरां रराज ॥ ६० ॥

सा रुक्मिणी किन्तु गुरोरगृह्णात्
वेदस्थले गोरचनाप्रकारम् ।
सङ्कल्पकार्य्ये ललना प्रवृत्ता
तिलस्थले धान्यमिवास्तिपत्नी ॥ ६१ ॥

चित्रादि पित्राह्नितनीतिरेषा
शिल्पं शिशिक्षे समरस्थले च ।
नारीव भद्रेव च शूद्रजातिः
नमःप्रयोगं प्रणवाभिधाने ॥ ६२ ॥

विद्या न चेत् स्यात् क्षितिपात्मजानां
सुमेधसां यत्नवताममीषाम् ।
कृषीवलैः सिक्तजला सुकृष्टा
तदोप्तबीजाप्यफलोर्व्वरा स्यात् ॥ ६३ ॥

सामाश्रया निर्म्मलवर्णयुक्ता
विज्ञापयन्ती बहुवस्तुतत्त्वम् ।
एतैः कुमारैः परिशब्द्यमाना
मातेव लेभेऽखिलवेदविद्या ॥ ६४ ॥

श्रितान्तकोदण्डमहोपकारी
निष्पादक: मन्तमाहवस्य ।
सखा धनुर्वेदगतस्य बोध:
परस्परं तेषु बभूव तुल्य: ॥ ६५ ॥

शब्दीयविद्या प्रतिहारिणीव
ज्ञानस्य सोपानमवेक्षयन्ती ।
आख्यातनामप्रथिता निनाय
समस्तशास्त्रालयमध्यमेतान् ॥ ६६ ॥

रसोद्धुरा भावगुणप्रमुग्धा
सालङ्कृता रीतिमती नवीना ।
अतीवचारुध्वनिभागमीषां
जग्राह कण्ठं किल काव्यविद्या ॥ ६७ ॥

अज्ञानतामिस्रमलं हरन्ती
विकासयन्त्याननपङ्कजानि ।
तेषां महाच्छे हृदयान्तरीक्षे
स्मृतिज्ञतार्कच्छविराविरासीत् ॥ ६८ ॥

दशाविशेषेण समाददाना
स्नेहं तम:शान्तिविधानदक्षा ।
द्रष्टव्यमर्थं परिदर्शयन्ती
प्रदीपिकेवास्थित नीतिरेषु ॥ ६९ ॥

स्ववंशजातान् परिचाययन्ती
दत्तान्वयोत्कीर्त्तनकारिणी च ।
एतान् बभाजोपयमोपयोग्यान्
पुराणविद्या घटकावलीव ॥ ७० ॥

विद्या च बुद्धिश्च मनोज्ञता च
सापत्नवैरेण परस्परं ताः ।
स्वविप्रयोगे परयोगचिन्तां
कृत्वेव शश्वत् परिरेभिरे तान् ॥ ७१ ॥

उपेन्द्रः स्वसारं प्रसह्यापहर्त्ता
महस्वी मनस्वीति जानन् पुरेव ।
विशेषात् समीकं स रुक्मी शिशिक्षे
दुरन्तः प्रयत्नो हि गाढोद्यमानाम् ॥ ७२ ॥

जानन् स्वयं जनमुखाच्च निशम्य सम्यक्
विद्यां ननन्द नृपतिर्निजनन्दनानाम् ।
विद्या सुतेषु रजनीषु च पौर्णमासी
क्षेत्रेषु शस्यमपि कस्य न तोषकाणि ॥ ७३ ॥

राजानीतान् निजपुरममून् सर्वदौर्जन्यशून्यान्
धन्याः कन्याः परमभिमतान् वल्लभान् लेभिरे तान् ।
किन्तु क्षौणी यदि च न जड़ा सर्वथैवाभविष्यत्
राज्ञः पुत्रान् स्वयमपि तदा पाणिमग्राहयिष्यत् ॥ ७४ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
विद्याग्रहणं नाम द्वितीयः सर्गः ॥ ० ॥

# तृतीयः सर्गः ।

——०(०)०——

वसुन्धराधीशधुरन्धरः परं
सुताभिषेकार्थमचिन्तयत् क्रियत् ।
स्वयं हि विघ्नो विविनक्ति शक्तितः
प्रवर्त्ति बन्धून् विदधात्यथो विधिम् ॥ १ ॥

सुतस्य मे नव्यवधूर्विनाऽवनीं
विराजते नापि विवाहिता हिता ।
दिवो न चेन्नन्दति चन्द्रिका तदा
न विद्यते हृद्यतमा तमस्विनी ॥ २ ॥

ऋते च राज्येन न केवलाबला-
समाश्रितो राजजनो विराजते ।
विना हि वादेन मनीषिमण्डलीं
न पण्डितो मण्डयते वितण्डया ॥ ३ ॥

जनोऽतियोग्योऽपि न योग्यभोग्यभाक्
न कर्त्तुमिष्टं क्षमते क्षमातले ।
प्रवर्त्तमानोऽन्तरपूर्वपर्वते
विभाकरोऽप्राप्य नभो न भासते ॥ ४ ॥

विहाय राज्यं किल राजसम्भवं
गुणैरनेकैरपि रीतिभिर्युतम् ।
कृती विनालङ्कृतिमुत्तमां जनः
कवेर्महाकाव्यमिवावमन्यते ॥ ५ ॥

पिता च दद्यादुपयुक्तपुत्रके
भरं कियन्तं कर्मणि स्वयं वहेत् ।
तथाहि वेदः स्मृतिशास्त्रमप्ययं
स्ववाच्यशेषं बहुमर्मसार्पयत् ॥ ६ ॥

जरन्नहन्त्वाद्य जरातुरा तनुः
बलञ्च जातं क्षितिरक्षणाक्षमम् ।
धुरन्धरैकोढ़धुरा वसुन्धरा
न तत् स्थिरं स्थास्यति मे स्थिरापि सा ॥ ७ ॥

जनेन जीर्णेन्द्रियशालिना सता
प्रजावतीं कारयितुं विशक्तिना ।
धरावधानात् परिरक्षिताप्यसौ
क्षणेन वीरं परमेव गच्छति ॥ ८ ॥

असौ पतिप्रेम नहि व्यपेक्षते
नवा स्मरत्याद्यभवां कृतज्ञताम् ।
विकृष्यमाणा पुरुषैर्बलात् परैः
भवेच्च तेष्वेव मुदा वशंवदा ॥ ९ ॥

विलक्षणं रज्यति रक्षणाक्षणे
विचक्षणा पल्लवधूरपि प्रिये ।
इयन्तु रक्षाक्षण एव दुष्कृता
वसुन्धरासूयति हन्त पुष्णति ॥ १० ॥

जरन्तमुद्वीक्ष्य दुरन्तशात्रवः
समोहितारः किल जेतुमेव माम् ।
गुहागतो ध्वान्तचयो दिवातने
दिवः पतङ्गं निपतन्तमिच्छति ॥ ११ ॥

अतीतवान् षट्परिपन्थिमन्थनं
तथापि तेषां विषयं विशामि चेत् ।
तदा क्षमिरन्, समक्षमागतं
विधुं तुदत्येव विधुन्तुदो न किम् ॥ १२ ॥

निमील्य नेत्रे तुलसीतलस्थिते
मयि क्षणं वा हरिभारतीरते ।
समन्ततः सन्ततमन्तिके पुरः
पुरेत्य दुःखी सुजनो जनिष्यति ॥ १३ ॥

अधीतविद्या कुमतौ न विद्यते
न कृष्णपक्षे हरिणाङ्कवर्द्धनम् ।
गतं वयो न प्रतिवर्त्तते पुनः
न चापि वृद्धे पुन ऋद्धिवासना ॥ १४ ॥

न मोहितो वासनयानया पुनः
भवाम्यभव्यस्य भवस्य नश्यतः ।
समस्तमस्ताचललीनमौलिना
मरीचिमन्वेति विरोचनो न च ॥ १५ ॥

इहास्मि साम्भोनिधिमेदिनीश्रिता
सुते च राज्ञि प्रभवामि तत्पिता ।
तदेव राज्यं वितरामि सूनवे
निजोन्नतिं साधु सुधीर्जहाति न ॥ १६ ॥

स मन्त्रयन्नित्थमथान्तरात्मना
न्यवीविदत् स्वञ्च निमन्त्र्य मन्त्रिणम् ।
समुद्रयोः सम्मुखवाहिनोरिव
तरङ्गवृन्दं सुखमैधतानयोः ॥ १७ ॥

तदैव दैवेन तयोश्च यत्नतः
सुताभिषेको द्रुतभावुकोऽभवत् ।
जलेऽनुकूले पवने च पृष्ठगे
तरिप्रयाणे न भवेद्विलम्बनम् ॥ १८ ॥

समुद्यतोरिङ्गितमात्रतस्तयोः
जनाः समीयुर्बहवो विधित्सवः ।
कटाक्षमात्रेण करोति यत् प्रभुः
न तद्दरिद्रस्य हृदोऽपि गोचरः ॥ १९ ॥

विधत्स्व कर्म्म त्वमदस्त्वमप्यदः
इति प्रदिष्टा परिवारसंहतिः ।
शिरस्यथाज्ञामपि मानसे मुदं
मुखे विकासञ्च समच्छदेकदा ॥ २० ॥

कलेवरे स्वच्छपरिच्छदच्छलात्
विभूत्य भूत्यालिरिवामदद्युतिम् ।
विडम्बयन्ती दिविषत्तरङ्गिणीं
समन्ततस्तीर्थजलार्थमभ्यगात् ॥ २१ ॥

युतास्तदैकैकदिशं त्रयस्त्रयः
प्रवव्रजुः श्रेणिकृताः प्रजाव्रजाः ।
शतत्रयाङ्कानिव तानलोकयन्
जनास्त्रयस्त्रिंशदधिश्रितान् पथि ॥ २२ ॥

सितोपलैर्निर्म्मितहर्म्म्यपङ्क्तयः
विचित्रचित्रैर्बहुलैरलङ्कृताः ।
पतत्पताकाभिरनेककान्तिभिः
कराञ्चलैराजुहुवुर्जनानिव ॥ २३ ॥

वनावनीसद्मनि पद्मिनीजनः
विनिर्म्ममे सुन्दरकुन्दमालिकाम् ।
मुहुर्नितान्तं निजदन्तसन्ततिम्
अनाविलादर्शतले ददर्श च ॥ २४ ॥

पुराङ्गनेषु प्रसृताङ्गनागणाः
अशूशुधन् याः किल शोधनीभृतः ।
द्विषां नु ता मूर्द्धसु धूलयो लयं
ययुर्यतोऽमी दमिता इव स्थिताः ॥ २५ ॥

सुवर्णदण्डेषु सुवर्णमण्डिताः
पुरे पताकाः पुरवश्चकम्पिरे ।
लघुस्वभावाश्चपलाश्च संस्थिताः
प्रयान्ति जातु स्थिरतां स्थिरेऽपि न ॥ २६ ॥

धनुर्भटानां परितो रणं यथा
पथो मुखस्योपरि तोरणं बभौ ।
विहङ्गिमाः स्मात्र खगा नदन्ति न
क्षताश्च वृत्तच्छदनेन दन्तिनः ॥ २७ ॥

अमन्दसिन्दूरविसुन्दरीकृत-
विशालकुम्भा गजराजराजयः ।
दिनान्तसन्ध्यारुणरागरञ्जितां
समन्वकुर्वन्त वलाहकावलीम् ॥ २८ ॥

तुरङ्गमा यत्र तरङ्गताङ्गताः
जलप्रवाहा निवहा नृणां पुनः ।
सुधाभसौधा जलयानसञ्चयाः
तरङ्गिणी सा किमभूत् पुरी परा ॥ २९ ॥

नटैश्चमत्कारिणि नाटमन्दिरे
सहायनीकृत्य नटीः पटीयसीः ।
तिरस्करिण्यावलिरुञ्छिता च सा
दिदृक्षमाणांस्तरुणानवारुणत् ॥ ३० ॥

निमन्त्रिता मन्त्रिभिरेत्य भूभृतः
निजप्रभाभिः समभासयन् सभाम् ।
तदीयतेजोविजितः प्रभाकरः
महावितानेन तिरस्कृतः स्थितः ॥ ३१ ॥

विपश्चितः पश्चिमतः प्रतिष्ठिताः
अहर्म्मुखे पूर्व्वमुखाश्च भूभृतः ।
विरेजुरेके तु यमादिसञ्ज्ञयात्
न तादृगन्ये यमवश्यवर्त्तिनः ॥ ३२ ॥

परः परास्तो विदुषापरेण यः
स जोषमास्ते स्म विनम्रमस्तकः ।
निजैर्महाजन्य इवाहतं जनं
नृपा विचेष्ट' तममी अमंसत ॥ ३३ ॥

महोच्छ्रितो वीक्ष्य विदां विचारणं
सुविस्मिताः सस्मितमूचुरीदृशम् ।
जयत्यदो मानपणं विचारणं
रणो हि नः प्राणपणः सुदारुणः ॥ ३४ ॥

इतोऽन्तरे राजकृतं सभाजनं
अतोषयत् सर्वमिमं सभाजनम् ।
कृतं नृणां योग्यजनेन माननं
करोति फुल्लाब्जसमानमाननम् ॥ २५ ॥

शिशिक्षिरे यत् कुटिलेक्षणं चिरं
गणाङ्गनास्तस्य फलं तदाप्नुवन् ।
विहाय येनैकसदःसदो बुधान्
महोचितश्चक्षमिरे समीक्षितुम् ॥ २६ ॥

निनाय नेत्रं नवनायिकागणः
विदां विचाराश्रवणे त्वमभ्यता ।
विधूनितं लिप्सु मनो मनोभुवा
महाविपत्तिर्यु वभूभृतामभूत् ॥ २७ ॥

तदैकदैकः करिणां करोपरि
परश्च तोर्यागतदूतसञ्चितः ।
नवाङ्गनानामुरसीतरः पुनः
अलम्भि कुम्भस्त्रिविधो जनेक्षणैः ॥ २८ ॥

सहाङ्कुशेन प्रथमे च कुङ्कुमः
बभौ द्वितीये च जलं सपल्लवम् ।
पटस्तृतीये सह लोकलोचनैः
न कोऽपि कुम्भः किल शून्यतामगात् ॥ २९ ॥

करीन्द्रकुम्भो ननु नित्यनीरसः
क्षणोत्पतिष्णुश्च रसश्चराहृते ।
रसस्थिरस्थः कुचकुम्भ एव यत्
स आदरात्तद्‌घनवाससावृतः ॥ ४० ॥

कियच्चलच्चेलतिरोहितस्तन-
सरोजषण्डो न विरेजतुस्तदा ।
निजार्द्धचन्द्राङ्कितवक्त्रचन्द्रमाः
मृगीदृशां येन सभामभासयत् ॥ ४१ ॥

गुणैः स्वतुल्यो भवितैष भूपतिः
मनोभवः पूर्वमितीव भावयन् ।
दृगाशुग-भ्रूयुगकार्म्मुकग्रहां
चमूं रमाणामहिनोज्जिगीषया ॥ ४२ ॥

विलम्बिनीलोपलनिर्म्मितस्रजां
सुधासितं चारुरुचा चकासतम् ।
विशालनीलोत्पलसङ्कुलं जलं
विडम्बयन्तं सुरनिम्नगागतम् ॥ ४३ ॥ (कुलकारम्भः)

नवप्रवालावलिकान्तकान्तिभिः
विमिश्रितश्वेतमरीचिरञ्जितम् ।
विसारिभिर्गैरिकराशिरश्मिभिः
विधौतकैलासमिवाचलं चलम् ॥ ४४ ॥

पदे पदे हीरकखण्डमण्डितं
पदे लतां काञ्चनजाञ्च विभ्रतम् ।
ह्रतासनो यो मणिरासने प्रभोः
न भाति निस्वस्य शिरस्यपीह सः ॥ ४५ ॥

उपेतमेकैकजनस्य पश्यतः
प्रगृह्य विम्वं स्वयमत्यनाविलम् ।
स्वयोग्यताऽभावमवेक्ष्य तत्क्षणात्
त्यजन्तमङ्गाय निजान्तरादिव ॥ ४६ ॥

अहं भविष्यन् भविनो भुवः प्रभोः
पदादधःस्थो जनमूर्द्धभिर्धृतः ।
नृपास्तदूर्द्ध्वा द्विजभिन्नजन्मिषु
नृणामिदं भावयितुं शिरःस्थितम् ॥ ४७ ॥

प्रसह्य संगृह्य विवस्वतः स्वतः
समानतीव्रं प्रतिविम्वमम्वरात् ।
द्वितीयमादित्यमुदित्य दीप्तिभिः
विकासयन्तं सकलां सभामिव ॥ ४८ ॥

चलत्यसौ किं धवलाचलः क्वचित्
तरत्ययं वा तरणिर्धरातले ।
नृपस्य मूर्त्ता किमु कीर्त्तिरीदृशं
प्रकल्पयन्तं जनताविकल्पनम् ॥ ४९ ॥

नवाभिषेकाय च कायजीविनः
स्फुटद्युतिं स्फाटिकमुत्तमाकृतः ।
अतिष्ठिपन्नौकविलोचनैः सह
सभासदां कञ्चनमञ्चमन्तिके ॥ ५० ॥ (कुलकं समाप्तम्)

जनैरथान्तःपुरतः पुरःसरैः
समैः समं रुक्मिणि निःसृते सृतौ ।
सभा नितष्टम्भ तदा तदेकदृक्
निशीथिनीशे तटिनीव निर्यति ॥ ५१ ॥

पुराणराजस्य चिरस्य वत्सला
सविस्मया सभ्यविभक्तभूभृताम् ।
प्रजासमाजस्य च भक्तिपूर्विका
त्रिधैव दृष्टिर्युगपत् पपात तम् ॥ ५२ ॥

ततोऽनुगा काचन वामलोचना
शिवानुभावा शिविकाधिरोहिणी ।
नरेन्द्रजस्याहरतां सतां मनो
गिरीशगौरीपुरुरूपगौरवैः ॥ ५३ ॥

कुलीनशालीनतया नताञ्च तां
विलोक्य लोकश्चकमे न कश्चन ।
गुणे सकामा किल लौकिके नृणाम्
अलौकिके भक्तिमती मतिः पुनः ॥ ५४ ॥

उपेत्य पर्य्यङ्कमथार्य्यमग्रभम्
अलङ्कृतो मेरुमरीचिरञ्जितः ।
अगात् स यद्देवपदाभिधेयतां
न तत्र चित्रं नरदेवजन्मनः ॥ ५५ ॥

दिगीश्वरांश्चान् वसुसंश्रयो वहन्
सुवर्णवानुच्चतमो धराधरः ।
सुमेरुतुल्यो नृपनन्दनस्तदा
दधार रुक्मीति स नाम सान्वयम् ॥ ५६ ॥

क्षितिप्रदेशादुपदेशतो गुरोः
विषेकमञ्चोत्थितमात्मभूप्रभम् ।
उपेत्य लेप्तुं परिलुप्तधीर्वधूः
सुगन्धिभिर्लीललतात्वमभ्यगात् ॥ ५७ ॥

नृपात्मजस्याङ्गविलेपने तदा
तदीयलावण्यरुचीसरोऽन्तरे ।
नवाङ्गनानां कुचकोरकः करः
मुखञ्च पुष्पाण्यदजानि पुस्फुटुः ॥ ५८ ॥

परिप्रलिप्ते ललितानुलेपने
नवा मरीची रुरुचे विसारिणी ।
असह्यवेगा नु पतिम्वरं न्दिरा
भूत विषेकात् समपूरयत् पुरः ॥ ५९ ॥

गुरूपदिष्टोऽपि वधूविलेपने
परं व्यलम्बिष्ट नितम्बिनीगणः।
भृशं कराकर्षस्मृते वियुक्ततां
प्रयात्ययस्कान्तमणेरयः कथम्॥ ६०॥

कुमारवामे नववामलोचना
सहस्रदृग्गोचरतां जगाम सा।
लतां सलीलां ललनाञ्च पुष्पिणीम्
अवश्यमुत्पश्यति लोक उत्सुकः॥ ६१॥

जहार माऽक्षीणि रसप्रतानिनी
प्रतानिनी पुष्पवतीव षट्पदान्।
न को जनः पश्यति हीनबालतां
न वा लतां काङ्क्षति को मधुव्रतः॥ ६२॥

ततोऽबला बाललतातिकोमला
यदा धराया उददीधरद्घटम्।
विलोक्य लोकाः कलसत्रयं तदा
प्रशङ्किरे तां बलवद्बलान्विताम्॥ ६३॥

प्रसन्नपर्य्यङ्कनिषसदम्पती
विलोकयन् स्नापयतोऽङ्गनाजनान्।
हरादिरूढ़े व्रततीवनस्पती
प्रवर्षुकां वारिदपङ्क्तिमस्मरत्॥ ६४॥

समन्त्रकैः पापनिवारिवारिभिः
शुचिप्रियौ तावसिचद्द्विजः शुचिः ।
रिपोर्विवर्णा वरवर्णिनी च तत्
निशम्य दीनाऽश्चिजलेन मेदिनीम् ॥ ६५ ॥

तमावसानं वसनं बभूवतुः
ग्रहीतुकामे युगपद्वधूश्रियौ ।
अपत्रपिष्णुः प्रथमा न सुस्थिरा
पराऽस्थिरा विग्रहमग्रहीत् समम् ॥ ६६ ॥

धृतः किरीटो मणिरत्नभास्वरः
विधुः शिवस्येव शिरस्यमुष्य यः ।
अपाहरत् स प्रतिविम्बकैतवात्
सदःस्थितानां प्रभुतां महीभृताम् ॥ ६७ ॥

धृते किरीटेऽथ वधूशिरस्यपि
सुयोजिते चाभरणेऽखिले तयोः ।
प्रलब्धवान् सभ्यविदग्धमुग्धयो-
र्गणः पुनर्ज्ञानमिदं तदा द्विधा ॥ ६८ ॥

पतिम्वरां निर्म्मलमालधारिणीं
श्रियं समेतां बुबुधे वधूं बुधः ।
अबोधि मुग्धस्तु पुमस्तु रुक्मिणं
वरं वरीतुं किमितीयमिच्छति ॥ ६९ ॥

वपुर्महालङ्करणेन किङ्करैः
अलङ्कृतं रुक्ममुखेन रुक्मिणः ।
महीपतेर्नन्दनकान्तिनन्दिनः
शुभान्नवीनात् समभूच्छुभन्मुखम् ॥ ७० ॥

जरन् यदा सन्ततवत्सवत्सलः
भुवः प्रदानं कृतवान् कृती नृपः ।
महामहीभारभरादिवापतत्
तदा पदाग्रेऽस्य कुमारमस्तकम् ॥ ७१ ॥

प्रकाशिताशीर्मुखजन्मनां मुखात्
रहोगतस्त्रैणकुलादुलुध्वनिः ।
जयध्वनिः स्वस्तिवचश्च सर्वतः
नरेन्द्रवर्गादुदतिष्ठदेकदा ॥ ७२ ॥

स्वनः स तौर्य्यत्रिकनिस्वनैः सह
समुच्चरन्नुच्चतरस्तदाऽभितः ।
रमाप्रदाने पवनेन विद्रुत-
समुद्रकल्लोलरवानवाहसत् ॥ ७३ ॥

प्रसूनवृष्टिर्निपपात रुक्मिणः
जनालिहस्तात् किल या तनूपरि ।
विनिःसृता भीष्मकपाणिपल्लवात्
हिरण्यवृष्टिर्युगपज्जिगाय ताम् ॥ ७४ ॥

प्रतर्पयन्तो हृदयं दयार्थिनः
स्तुतीरितैर्वन्दिजना ववन्दिरे ।
वसुप्रभूणां वसुधातले हि न
स्तुतेरभावो भवतीह कर्हिचित् ॥ ७५ ॥

अमुं किमु श्रीस्वपत्नाश्रिता नवा
सरस्वतीतीव परीक्षितुं स्वयम् ।
मुखे मुनीनाममनाक् प्रशंसतां
स्वतः सपत्नीगतमत्सरादगात् ॥ ७६ ॥

नृपः पुराणः करमेकधाऽनयत्
परं कुमारोऽप्यपरं ग्रहीष्यति ।
अहो दरिद्रस्य विपत् पदे पदे
पुरोऽस्मरन् जानपदा जना इति ॥ ७७ ॥

ततश्च दीना नृपदानतोषिता:
तयोस्तृतीयं परिलिप्सिरे प्रभुम् ।
ग्रहेण दुःखञ्च सुखञ्च दानतः
इयं गतिर्जागतिकी हि सर्वतः ॥ ७८ ॥

अनुत्तमान्नैः परिपूर्णकुक्षयः
महोत्तमान्नाशनसर्वथाऽक्षमाः ।
परं व्यषीदन्नविवेकिनो जनाः
असावधानस्य सुखेऽपि दुःखिता ॥ ७९ ॥

गृहे गृहे नाट्यसमीक्षणक्षणाः
अनेकदुःखप्रभृता जना अपि ।
भवाब्धिमुक्तानिव योगिनस्तदा
प्रमेनिरे स्वान् सुखितान् चिरादिव ॥ ८० ॥

गृहप्रयाणे धरणीभृतां गणः
कुमारपाणावुपहारमर्पयन् ।
पुरातनाय प्रभवे निजां निजां
शिरःप्रणामेन ददाविवोच्चताम् ॥ ८१ ॥

अधना धनानि च भुवं भुवोऽर्थिनः
क्षुधिताः सुधावद्बहुविधान्नमाददुः ।
अवनीपतावभिनवे हि रुक्मिणि
कमलालयेव निखिलालयाऽभवत् ॥ ८२ ॥

स्वराज्ये सुप्राज्ये तनयमभिषिञ्चन्नरपतिः
न लेभेऽन्तः शान्तिं समुचितसुतादानरहितः ।
स्थितो यः संसारे यतिलषितधर्म्मं स्पृहयति
मरुस्थाने तृष्णाङ्मृगयति स मुग्धः किल जलम् ॥ ८३ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये रुक्मिराज्याभिषेको
नाम तृतीयः सर्गः ॥ ० ॥

——(•)——

# चतुर्थः सर्गः ।

——•(०)•——

विषयस्य नृपश्चिरं रसान्
रसयंस्तद्विरतो रतिं दधे ।
स्वदितान्ननिवारितक्षुधः
सुलभा सापि सुधा मुधायते ॥ १

परिचिन्तयतश्चितश्चिरं
विषयस्तस्य सुखायते स्म न ।
अधिकं द्युमणौ समुद्यति
न कियद्दीपयते हि दीपिका ॥ २

सह वासनया भुवः प्रभोः
तनुरासीत् क्रमशस्तथा कृशा ।
वहतोऽपि चिरं धराधुरं
तनुभारोऽपि सुदुःसहो यथा ॥ ३ ॥

निजपूर्वदशाऽवसानतः
सकलस्नेहविहीनतावशात् ।
समकोचि शनैर्मुमुक्षतो
नृपतेर्दीपशिखेव वासना ॥ ४ ॥

क्षणमप्यनपास्तसन्निधि-
मतिहृद्यामनुरागिणीं चिरम्।
परिहाय नृपो नृपश्रियं
समुदासे स मुदा शनैः शनैः॥ ५॥

हृदि सत्त्वगुणेन भूपतेः
उषसीवाधिकृते विवस्वता।
अतिनिर्म्मलतेजसाश्रिते
परिनिःशेषमपासरत्तमः॥ ६॥

पवनेन परिष्कृतेऽथवा
विमलज्ञानविकाशनेन च।
लघुना रजसा तदास्पदं
प्रतिपेदे नृपतेर्न मानसे॥ ७॥

विफलाङ्गवनाद्गनाश्रमम्
अभिपिप्राय नृपो रहःप्रियः।
अपि कर्म्मणि दर्शनेऽशने
भविता यत् फलमेव केवलम्॥ ८॥

तनयाप्रतिपादनावधि
गृहमेधीभवितुं प्रभावुकैः।
स्वजनैर्बहुधा प्रबोधितः
बहुविघ्ना हि सतां सती क्रिया॥ ९॥

रुरुचे रुचिरश्च नैव तत्
वचनं प्रत्युत भीतिमावहत्।
नहि सत्पथगामुको जनो
गतकान्तारमुपैति बुद्धिमान्॥ १०॥

बलवत् प्रतिकूलगामिनि
मनसि प्राज्यजवे च वारिणि।
वचसश्च तरेश्च नोदने
ननु कर्त्तुः श्रम एव केवलम्॥ ११॥

विमुखं नियतं विजानती
जनता नान्वरुधज्जनेश्वरम्।
भवतीह कथा वृथैव चेत्
ननु तूष्णीम्भवनं तदोचितम्॥ १२॥

क्रमते च सतीं क्रियां परं
परिरोद्धुं न विशुद्धबुद्धिमान्।
विनिवेशयितुं वनेषु यत्
अवनीशं तमुपादिशत् सुधीः॥ १३॥

अथ सारथिना पुरस्कृतं
क्षितिनाथानुमतेन तत्क्षणम्।
गहने गमनाय वार्द्धक-
विकलाङ्गः स शताङ्गमाश्रयत्॥ १४॥

अपरो न बभूव भूपतेः
सहचारी विपिनप्रवेशने ।
विरहार्त्तजनस्य केवलं
जललोलाविललोचनावली ॥ १५ ॥

विषयं विजहद्दयतो ययौ
नृपतिः पातितपातकाहितः ।
तत एव पुरौकसां दृशः
विषयीचक्रुरमुं नहीर्षया ॥ १६ ॥

श्रुतिचारुतरश्रुतिस्वनैः
अपि साम्नामविगीतगीतिभिः ।
बहुहव्यजधूमसंस्रवैः
अतिदूरादपि सूचिताश्रमे ॥ १७ ॥

अवशिष्टकुशान् समश्नता
मृदु शृङ्गैर्लिखता जटान्तरम् ।
स्वयमागतशान्तिसेविना
यतिनामैणगणेन शोभिते ॥ १८ ॥

ज्वलितानलनिःसृतान् मुनेः
गुड़धानानथ देवसात्कृतान् ।
अददताध्युषिते महीतुना
वत पारावतपोतकैः सह ॥ १९ ॥

मुनिबालकक्लृप्तकेशर-
मृदुकण्डूयनमुद्रितेक्षणैः ।
अपि केशरिभिर्विनिश्चलैः
परिविश्वस्ततमीकृतान्तरे ॥ २० ॥

विरहाद्दितसारथेरथ
रथमध्याद्भुवनेश्वरो वने ।
ववतार दृगम्बुधारया
रयवत्या विमलीकृतान्तरः ॥ २१ ॥ ( कुलकम् )

मुनयो नयपारगा नृपम्
अथ संवर्द्धयितुं तमाययुः ।
नवदर्शनमेकधर्म्मिणां
न खलु प्रीणयते हि कं जनम् ॥ २२ ॥

अभिवादयता दयालुना
लुनता स्वप्रभया भयं भुवः ।
दृढभक्तिसमार्द्रया दृशा
ददृशे योगिगणो युयुक्षुणा ॥ २३ ॥

परिशोधितपङ्कसङ्कुलः
श्रुतपातञ्जलजातधीजलैः ।
उपलैरिव मार्जितो मणि-
र्मुनिकः शुशुभे शुभप्रभः ॥ २४ ॥

परिशीलनया निरन्तरं
विधृतः केनचिदीदृशं यमः ।
शमनः शमशालिनो यथा
सुचिरं तस्य सुदूरगोऽभवत् ॥ २५ ॥

मलिनं वसनं कृशं वपुः
शिथिलं चर्म्म जटाश्च धारयन् ।
परिभूषितभूपतेरपि
बहुतेजोभिरदीपि कश्चन ॥ २६ ॥

गिरयाऽप्यनिवार्य्यवीर्य्यया
पिशुनान् दण्डयितुं क्षमोऽपि सन् ।
अवलम्बनसम्बलं पथि
दृढ़दण्डं दधदेकपाणिना ॥ २७ ॥

वरुणोऽपि जलैकसंश्रयः
सभयो यस्य जलात् पलायते ।
अपरे च करे कमण्डलुं
तमुपादाय बभौ च कश्चन ॥ २८ ॥ ( युग्मकम् )

सरसीव सरोजमुज्ज्वलं
मिलितैर्नूतनभानुभानुभिः ।
नयनं गुरुगर्त्तगर्भगं
रुरुचे कस्य च योगजैर्महैः ॥ २९ ॥

चिकुरास्तनुरोमराशय:
पृथुलश्मश्रु वयाश्च कस्यचित् ।
मनसा सह सत्त्वसङ्गिना
सुचिराद्विभ्रुरतीव शुभ्रताम् ॥ ३० ॥

परमां तनुतां तनूरगात्
न युधो वस्तु च किञ्चिदास्त चेत् ।
अचलापरिचालनक्षयौ
प्रमथाकेव तथापि कश्चन ॥ ३१ ॥

अथ ते मुनयोऽनयन्नृपं
गुरुसंसारगृहे तमोवृते ।
परिदर्शयितुं तपोभुवं
परतत्त्वं हितवाक्यदीपकै: ॥ ३२ ॥

गगनादथ हंसमण्डलात्
वततारोत्तमराजहंसवत् ।
परित: प्रभया प्रभासयन्
मनुजर्षीनमरर्षिनारद: ॥ ३३ ॥

गतमुक्तिपदोऽपि जीवितो
धृतदेहोऽपि विदेहबोधवान् ।
अथदण्डकुलालचक्रवत्
चिरसंस्कारवशेन यद्भ्रमि: ॥ ३४ ॥

तपने कृतनित्यसंयमात्
भुवनज्ञानसमन्वितः सदा ।
स सुरर्षितया नरर्षिभिः
अनुभूतः क्रियमाणसंयमैः ॥ ३५ ॥

ददिरे पदवारि हारिणे
निजदृष्ट्या मुनये यदेनमाम् ।
मनुजर्षिमनोगतं मलं
परिधौतं किल तेन तत्क्षणात् ॥ ३६ ॥

पदरेणुरपि प्रयात्यहो
भुवने यस्य न चार्घयोग्यताम् ।
अतियोग्यमिमे व्यश्रिश्रणन्
मुनयेऽर्घं विनयेन तस्मकै ॥ ३७ ॥

प्रणमन्ति जनाश्चिराय यान्
अथ तेऽपि प्रणमन्ति नारदम् ।
अनमस्यतयेति वीक्ष्य तं
निरणैषुः पशुविष्किरा अपि ॥ ३८ ॥

कथमत्र समागतो भवान्
इति तावत् परिपृच्छ्या मामलम् ।
गणविद्युत्तनोरङ्गीकरः
प्रचलन् प्रस्रवणे हि युज्यते ॥ ३९ ॥

प्रथमं प्रथते स्म नारदः
मुनिरेषां कुतुकं निवर्त्तयन् ।
स विदन्, वदते हि यः पुनः
अनभिव्यक्तपराशयं विदन् ॥ ४० ॥

प्रतिपादयतां भुवः शुभं
शुभपृच्छा भवतामनर्थिका ।
सविधे हि तमस्तमोनुदः
प्रतरोतुं नहि जातु दृश्यते ॥ ४१ ॥

परिशीलयतां तपःक्रियां
दुरितं दूरमुपैति वः स्वयम् ।
सुघनापि घनावली क्षयं
दिवि वाते परिवाति गच्छति ॥ ४२ ॥

मुनितां श्रयितुं तपोवने
समयोऽयं नृप ! सत्यमस्ति ते ।
अरिपुर्विषयः परं वयः
ननु योग्यस्य सुतस्तवाधुना ॥ ४३ ॥

नृप ! किन्तु सुदन्तुरा क्रिया
पुनरेका परिशिष्यते तव ।
अयि ! भूतपतिं विनाऽवनौ
न भवेत् कस्य जनस्य विस्मृतिः ॥ ४४ ॥

पतिसाद्गता तवालये
तनया शैशवसोम्नि वर्त्तते ।
तृषिताय जनैर्यथा जलं
युवतिर्यून इह प्रदीयते ॥ ४५ ॥

तनुजाञ्च रुजामृणक्रियां
परिवर्द्धिष्णुमतीव दारुणाम् ।
सुधियः समये प्रदाय तत्
चिरशान्तिं किल यान्ति सुस्थिराः ॥ ४६ ॥

दशवर्षगता सुता गृहे
जठरे दारुणदुःखदा क्षुधा ।
अनयोः प्रथमैव दुःसहा
घटतेऽन्नं परितो हि नो वरः ॥ ४७ ॥

तनयां तरुणीं विलोकयन्
अददद्वयः खलु नोन्मनायते ।
क्षमते समुपेक्ष्य स स्थिरः
शयितुं स्वे शिखिनः शिखां गृहे ॥ ४८ ॥

अथवा दहनो दहत्यहो
क्षितिपकं गृहमैहिकं नृणाम् ।
पितरौ ससहोदरौ दहेत्
विषमा पुष्पवती तु कन्यका ॥ ४९ ॥

न समां मनुतां मनुष्यप !
व्रततीं पुष्पवतीञ्च कन्यकाम् ।
प्रथमोन्नतिहेतुरर्चनात्
अपराधोगतिमेव यच्छति ॥ ५० ॥

इतरस्य समस्तवस्तुनः
घटते पात्रमहो समन्ततः ।
तनयाप्रतिपादने परं
भुवनेष्वेकमपीह दुर्लभम् ॥ ५१ ॥

भव भूमिपते ! स्थिरान्तरः
तदिमां योग्यजनेन योजयन् ।
अतिशान्तिकरी हि धर्म्मिणां
परनिक्षेपसमर्पणक्रिया ॥ ५२ ॥

इति देवमुनौ मनस्विनं
मनुजेन्द्रं विरते निगद्य तम् ।
नयविद्विनयेन नारदं
तमनूचानमिदं नृपोऽवदत् ॥ ५३ ॥

भगवन् ! भुवने भवादृशां
वचनं शास्त्रतयैव विश्रुतम् ।
अवधीरयितुं न धीरधीः
तदिदं नोत्सहते क्षतोऽपि सन् ॥ ५४ ॥

भवतां वचसामनुत्तरा
दवहेला, कथनाच्च धृष्टता ।
कथनं तदमुष्य मृष्यतां
क्रमते ह्युत्तरतां न दक्षिणः ॥ ५५ ॥

विषयाद्विरतेः परं जनः
प्रचिकीर्षन् परलोकगां क्रियाम् ।
अतरङ्गतरङ्गिणीजले
विफलाम्भो भविताप्लवार्थिवत् ॥ ५६ ॥

प्रगणय्य यदीह शेषयेत्
जलबालूर्वियतश्च तारकाः ।
निपुणोऽपि तथापि मानवः
नहि संसारकृतेः कलामपि ॥ ५७ ॥

अतिशिष्टजनः स्वचेष्टया
विषयान्तं नहि गन्तुमीश्वरः ।
चिरवाहनयापि नाम्बुधिं
तरिमारुह्य तरीतुमर्हति ॥ ५८ ॥

गृहकार्य्यसमापनेच्छया
तदकार्षं न तु शेषमाप्तवान् ।
ज्वलितं व्यजनेन पावकं
ननु निर्वापयितुं हि कः क्षमः ॥ ५९ ॥

पितृराज्यमजय्यविक्रमः
सकलाङ्गं परितो विलोकयन् ।
स्वकराकलितं यथा फलम्
अभिषं साभ्युदयानुपप्लवम् ॥ ६० ॥

तनयाय नयैकचक्षुषे
स्थिरराज्यं वितरन् समुज्ज्वलम् ।
कृतकृत्यतया व्यरंसिषं
परिभुक्तस्य कुतो बुभुक्षुता ॥ ६१ ॥

सुतपुत्रविवाहदर्शनं
तनयादानमशेषमोदृशम् ।
अननुष्ठितकार्य्यमस्ति मे
नहि शक्या करणीयशेषिता ॥ ६२ ॥

जननावधि संयमी भवान्
नहि संसाररसं समन्वभूत् ।
अत एव तु मां वदत्यदो
न धनी वेत्ति हि दीनवेदनाम् ॥ ६३ ॥

सुदृशः सदृशं न दृश्यते
मम पुत्र्या भुवि पात्रमत्र यत् ।
वरमाहुरयोग्ययोगतः
चिरकौमारमहो महाधियः ॥ ६४ ॥

अथ भूपमुवाद नारदो
रददीप्तो द्विरदेन्द्रभास्वरः ।
सति कर्म्मणि धर्म्मकारणे
महतिप्सोर्महतो महाग्रहः ॥ ६५ ॥

नृपते ! गृहिणां गृहक्रिया
यदनन्तेति निगद्यते न तत् ।
भुवने परमेशशेषयो-
र्न तृतीये क्वचिदस्त्यनन्तता ॥ ६६ ॥

अपरप्रथित निजं यशो
न यशस्वी स्वयमेव भाषते ।
स्वविबोधकप्रत्ययोदये
प्रविपर्य्येति विभक्तिरर्थभाक् ॥ ६७ ॥

अथवा स्वयमेव वक्ति चेत्
स्वकृतिं स्याद्विमुखस्तदा परः ।
वदते हि पदं स्वमेव यत्
क्रियया तत्र तदन्यदुच्यते ॥ ६८ ॥

विषये चिरनिस्पृहा अपि
नहि विद्मो न वयं कथञ्चन ।
किमसौ रजनी दिवेति वा
मनुते किं मुदितेक्षणोऽपि न ॥ ६९ ॥

वरदुर्लभतानिबन्धनं
किमदत्तैव सुता वसेच्चिरम् ।
नहि तत्, कति सन्ति सद्वराः,
न च को वाञ्छति सान्द्रचन्द्रिकाम् ॥ ७० ॥

नृपते ! पतितोऽसि विभ्रमे
शृणु वाणीं मम सूनृतामिमाम् ।
कमला विमले तवालये
सरसीवाजनि सा सरोजिनी ॥ ७१ ॥

करुणातरणिः समुद्गतो
ननु यस्या धरणीशरीरिणाम् ।
अतिदैन्यतमः प्रतारयन्
तनुते वैभवसम्पदातपम् ॥ ७२ ॥

त्रिदिवेशपतिः शतक्रतुः
यदमर्षाद्बहुवर्षवर्त्तिनीम् ।
उपरक्त इव प्रभाकरः
करशून्यः किल दुर्गतिं गतः ॥ ७३ ॥

अथवा विफलो ममोद्यमः
गुणगाने श्रिय एष सर्वथा ।
गगनस्य रमागुणस्य च
परिमाणे भुवनेषु कः क्षमः ॥ ७४ ॥

अयि ! यं त्रिजगज्जनन्यपि
जनकं स्वीकुरुते महीपते ! ।
चपलाप्यचला च यद्गृहे
समभाग्यो भवतास्ति तेन कः ॥ ७५ ॥

जगतां प्रवरं वरं भवान्
स्वसुतायोग्यमुपैष्यति ध्रुवम् ।
सह चन्द्रमसैव चन्द्रिका
यदि युक्ता वद का नु वेदना ॥ ७६ ॥

सकलोपनिषन्निवेदितः
सद्ब्रह्मतया च विश्रुतः ।
भगवानज एव जातवान्
वसुदेवाद्‌धृतकश्यपाकृतेः ॥ ७७ ॥

अवतारपरम्पराश्च यः
नटवत् कार्य्यवशाद्युगे युगे ।
जगतामुपकारकारणं
समधासीदविचिन्त्यवैभवः ॥ ७८ ॥

अथ योगनिरुक्त ईश्वरः
पुरुषः सांख्यमतश्च निर्गुणः ।
अपि मन्त्रमयश्च चिन्मय
इति मीमांसकसम्मतश्च यः ॥ ७९ ॥

अधुना नगरीं गरीयसीं
सकलो द्वारवतीमधिष्ठितः ।
नलिनीं नलिनासनो यथा
भगवानुद्धवपालनान्तकृत् ॥ ८० ॥

परिवर्णयितुञ्च यद्गुणं
नृप ! शास्त्राणि चतुर्द्दशावधि ।
प्रसजन्ति विशश्रमुः परं
क्षमताऽभावजयेव लज्जया ॥ ८१ ॥

त्रिजगद्दुरितौघकर्षणात्
दयया भूमिप ! कृष्णपूर्वकम् ।
स्वगुणैः सकलप्रमोदनात्
प्रदधे चन्द्रपरञ्च नाम सः ॥ ८२ ॥

जललेशमपीह यस्मकै
ददता श्रद्दधतैव जीयते ।
तनयां प्रतिपाद्य तत्करे
इह चामुत्र च जीयतां नृप ! ॥ ८३ ॥

इममर्थमुरीकरिष्यति
कमलेशस्तव नास्ति संशयः ।
जलधिः प्रजहाति जाह्नवीं
समुपेतामतिदूरतः किमु ? ॥ ८४ ॥

इति सुनीतिकथां कथयन्मुनिः
स विरराम रमापतिभक्तिमान् ।
क्षितिपतिस्तु भवेज्जगतीपतिः
स्वतनुजापतिरित्यगमन्मुदम् ॥ ८५ ॥

पदसरोजरजोऽथ रजोहरं
प्रणमनार्थनते मुनिमूर्द्धनि ।
स वितरन् स्वसमागमगामुकीं
सुमुदमन्तरधान्मुनिरादधत् ॥ ८६ ॥

प्रकामकमनीयतां प्रवितरीतुकामः सुतां
मुरारिकरपल्लवे लिपिमसौ नृपो लेखयन् ।
ससर्ज निजसूनवे नवनृपाय यामञ्जसा
सुतोद्वहननाटके भवति सा स्म प्रस्तावना ॥८७॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये चतुर्थः सर्गः ॥ ० ॥

——::०::——



# पञ्चमः सर्गः ।

—— o ——

वाचि वाचिकहरो गुरुदत्त:
कुण्डिनाख्यनगरीमगमत् सः ।
लीलया कमलया चिरगूढ़ां
विश्वगुञ्जुलितकान्तिमवन्तीम् ॥ १ ॥

निर्भयश्च सहसा सहसास्ये
आगते परिचिते नृपदूते ।
गोपुरं परिजहौ प्रतिहारी
को न विश्वसिति वा सति लोके ॥ २ ॥

दुर्गमेऽप्यविदतां गुरुसारे
सञ्चरत्प्रचुरतत्त्वविचारे ।
धीरबोध इव दर्शनशास्त्रे
प्राविशत् स नगरे धृतशस्त्रे ॥ ३ ॥

लोकलोचनफलं वितरन्तीं
भूभृतः परिषदं परिपश्यन् ।
विस्मयोल्लसितनिश्चलनेत्रः
श्रान्तिमागमनजामजहासीत् ॥ ४ ॥

आसनान्तिकगतानि समानि
तोणि निर्मलमणीनलिनानि ।
कान्तिमन्ति जगदुर्जगदुच्चैः
संसदो रसवतीं सरसीताम् ॥ ५ ॥

सभ्यतारकमिनद्विजराजं
नीलचेलजवितानपयोदम् ।
तत् सदो गगनतां समधासीत्
शून्यतान्तु नहि गन्तुमशक्नोत् ॥ ६ ॥

लोलचेललुलितं ललितञ्च
मन्दमन्दमकरन्दसुगन्धिम् ।
अभ्रमद्भ्रमरराशिरुपेत्य
पुष्पकाननधिया गुणगायी ॥ ७ ॥

रुक्मिणो नवनृपस्य विचार-
चातुरीमिव विलोकितुकामाः ।
चित्रचित्रपटचित्रितदेवा
आगमन्नपरसंसदुपेताः ॥ ८ ॥

स्नेहमाधित मनो मनुजानां
पश्यतामविचलन्नयनानाम् ।
शीतलोज्ज्वलरुचो मणिदीपाः
जज्वलुर्धवलसौधशरीरे ॥ ९ ॥

भानुरास्थित न तिग्ममरीचिः
चन्द्रमाः समुदितो न तु रात्रिः ।
चन्द्रसूर्य्यमणिशालिनि सौधे
राजपीठमभितः सुमनोज्ञम् ॥ १० ॥

दुर्लभैर्विरचितं मणिपुञ्जै-
र्मञ्जुलासनमथैकमदोऽपि ।
रोचिषातिरुचिरेण चिरेण
आश्रितत्वमधिगच्छति येषाम् ॥ ११ ॥

रत्नदीधितिजटं गजमुक्ता-
च्छलदण्डरिवर्द्धितपुच्छम् ।
दीप्तपीतमणिलोचनयुग्मं
स्वर्णपादमपि वज्रकृतास्यम् ॥ १२ ॥

तच्च संसदि न केवलमुच्चैः
सिंहतां किल निजां निजगाद ।
स्वामितस्य नृपतेरपि राज-
सिंहतां हतरिपुं प्रमिमाय ॥ १३ ॥ ( युग्मकम् )

तच्च शुक्लसुषमोपलपीठं
निर्म्मलं मनुजनाथसनाथम् ।
भूतनाथवसतिं विषमाङ्गं
श्वेतशैलमहसहनकीर्णम् ॥ १४ ॥

मन्त्रिणं सुविपुलं समदर्शन्
राजकार्य्यमणुना मनसैव ।
दर्पणे हि विमले तनुमध्ये
विम्बितं भवति वस्तु समस्तम् ॥ २० ॥

तोषयन् धनपतिं नृपमिनम्
अन्तकञ्च नितरामपराध्यन् ।
गीष्पतिं ललितयुक्ति सुवक्ता
योगिनं मुनिगणञ्च ददर्श ॥ २१ ॥

ऊर्द्धगा नृपसभा स्थिरभावा
सा जनौघभरिताऽप्यनिनादा ।
ऊर्म्मिनादमुखरां चपलाञ्च
निम्नगामुपजहास सदैव ॥ २२ ॥

धर्म्मराजपरिवर्द्धितशोभा
नान्तकस्य गमनेऽप्यधिकार: ।
सा सहस्रनयनेन कृतश्री:
गोत्रभिन्न खलु कश्चन दृष्ट: ॥ २३ ॥

ईदृशीमथ स वीक्ष्य समज्यं
विस्मयं समितिमाश्रित दूत: ।
नूतना सकललोकललामा
कस्य नापहरते चलमक्षि ॥ २४ ॥

वीक्ष्य संसदममुष्य मनीषा
कार्य्यगौरववशात् प्रयियासुः ।
राजसन्निधिमपि न्यवृतच्च
कामिनीव विदधत्यभिसारम् ॥ २५ ॥

भीतभीतमिव दूतमुपेतं
वीक्ष्य सोऽन्तिकगतावनुजज्ञे ।
किङ्करः किल गुरोरपि नीचः
गौरवी विनयिनां हि समीपे ॥ २६ ॥

आधरानतशिरोधर एष
सम्प्रणत्य निकषा नृपपादम् ।
पञ्चशाखमधि तस्य विसारि
पत्रपत्रिणमतिष्ठिपदारात् ॥ २७ ॥

नेच्छिताक्षरलिपिं परिगृह्य
किन्नु वृत्तमिति शङ्कितचेताः ।
मौनवान्नरपतिः स्वयमेव
निर्निमिषनयनो निपपाठ ॥ २८ ॥

स्वस्ति ते कमलकोमलशील-
शालिनि प्रकृकृतां वनमाली ।
सा तु सत्यपि चिराय सपत्नी
तां बधूमवधुनोतु न लक्ष्मीः ॥ २९ ॥

निःसरन्नपि गृहाद्गृहचिन्ताम्
इङ्गितास्मि न परं परिहर्तुम्।
नो वने निवसनेन मुनित्वं
हन्त शान्तविषयत्वमिदं तत्॥ २०॥

कानने परिवसन्नपि काश्चित्
नो गृहवृत्तिमुपेक्षितुमर्हः।
अस्तमस्तकगतोऽपि हि मित्रः
पूर्वपर्वतविभां न जहाति॥ २१॥

रुक्मिणी क्रमधृताङ्गविवृद्धिः
उच्छलल्लितकान्तिसमृद्धिः।
मां न चन्दयति चन्द्रकलेव
या परं स्फुटकलङ्कवती स्यात्॥ २२॥

यादृशो गुणवतो नव यामिः
नात्र तद्वदपराश्रवयामि।
भावना तदनुरूपवरस्य
नोत्तमा मुदमुपैत्यवरस्य॥ २३॥

अत्र निर्मलमनोगगने मे
भावनासलिलभृत्परिपूर्णे।
नारदानिलवचोभृशवेगात्
उद्गतः सखसुधांशुरपूर्वः॥ २४॥

एष तस्य सुमहानुपदेशः
देशकालगुणवंशविविक्तः ।
मन्त्रतुल्यपरमार्थसमेतः
सर्वथैव किल नः समुपास्यः ॥ ३५ ॥

सागरादिव यदोर्वसुदेवात्
देवकीतनुजनो रजनीशः ।
कोऽप्यसौ समभवद्भविकाश्रीः
कृष्णचन्द्र इति नामप्रतीतः ॥ ३६ ॥

पूतनानिपतनादि न चित्रं
कंसकंसनकरस्य चरित्रम् ।
यत्र भास्वति भवेन्नटशेषः
तत्र वृष्टिहृति को हि विशेषः ॥ ३७ ॥

ईश्वरेति च मुनिर्मनुते तं
मादृशः कृशदृशा तु किमत्र ।
अन्तरेण तरणिं विचरन्तं
को हि विष्णुपदमानमवैति ॥ ३८ ॥

जानकीव जनकालयवृत्ता
सा रमात्र रमते मम कन्या ।
जन्मजन्मनि हरिं कमते सा
प्रत्यहं दिनविभेव दिनेशम् ॥ ३९ ॥

तस्य पाणिकमले कमलाङ्गीं
रुक्मिणीं प्रवितरन् प्रियवत्स ? ।
वेधसो जहि विनिर्म्मितिनिन्दां
पालयस्व च पितुर्हितवाक्यम् ॥ ४० ॥

मन्नपोऽह नितरां वनवासी
श्रीमतां तदपि मङ्गलकामी ।
भीष्मको लिखितवान् लिपिमेनाम्
अस्तगोऽपि हरते तम इन्दुः ॥ ४१ ॥

वाचयन्निति नृपो विदधे सः
वैमनस्यपिशुनां मुखभङ्गीम् ।
आशयो हृदिशयो हि जनानां
चेष्टया मुखदृशोरनुमेयः ॥ ४२ ॥

ज्ञापयन्नगणितां प्रणतिं मे
तातपादनलिने वदिता त्वम् ।
आप्तलोकलपिते सति लब्धे
प्रेषितुर्निजलिपेः किमपेक्षा ॥ ४३ ॥

याति कारणमृते नहि भूयः
सुस्थितो गतपथं सुविवेकी ।
कानने निवसतो भवतोऽपि
युज्यते विषयगा नहि चिन्ता ॥ ४४ ॥

धारयन् गुरुधुरां धरणीशः
कार्य्यकार्य्यविमुखो जड़भावात् ।
वारिवाहपिहितो मिहिरो वा
राजते न भजते न च कीर्त्तिम् ॥ ४५ ॥

आश्रितस्य भवतो मुनिवृत्तिम्
एष भुक्तविषयेष्वनुरागः ।
राजतश्च तरणेरुपरागः
सन्तनोति नितरां मलिनत्वम् ॥ ४६ ॥

योगमध्यवमितुं क्षमते यः
तस्य गेहपटुता किमु चित्रा ।
दुष्करो गिरिशिरस्यधिरोहः
कः श्रमः खलु ततः पतने हि ॥ ४७ ॥

तद्भवन् ! भव पुनर्भवनाशि-
भावुकोद्यमयुतो भवियोगी ।
तेन नः फलवती भवितेच्छा
कृत्यकृत् प्रियतमो हि समेषाम् ॥ ४८ ॥

नारदो बुधपशो समदर्शी
जर्ज्जरो यदि हरिं प्रशशंस ।
तत् प्रमाणमिह नास्य गुणित्वे
सर्वं एव सुहृदो गुणवर्णी ॥ ४९ ॥

पूर्वमेव भगिनीमनुरूप-
रूपिणे क्षितिवराय वराय ।
दातुमौत्सुकयुतेन मयैव
प्रेषिता जनपदप्रजनौघाः ॥ ५० ॥

रुक्मिणी चरणैकपदिष्ट-
पात्रपाणिकमले यदि गच्छेत् ।
तन्मदीयलिपिरेव भवन्तं
कौमुदीव मुदितं किल कर्त्री ॥ ५१ ॥

आजनैर्हरिविरोधितयैतत्
दुर्नयीव कथयन् स निवृत्तः ।
द्विष्यमाणजननाम कथापि
शल्यतुल्यविभ्रमा द्विषतः स्यात् ॥ ५२ ॥

क्वाथवा विनयिनो प्रकृतिः स्यात्
भूरिभूतिमदमत्तमतीनाम् ।
वारिधिरपटुनाविकनुन्ना
नो तरिर्भ्रमिगता स्थिरगन्त्री ॥ ५३ ॥

मा वदीन्नृपमुनिं ममैतत्
सावलेपलपितं नृपसूनोः ।
तद्भवानपि भविष्यति धृष्यः
द्वेषभाग् भवति कः स्वगिरैव ॥ ५४ ॥

श्रीमती नृपसुता प्रकृतश्रीः
श्रीपतिं पतितयाश्रयितेव ।
जाह्नवीं जलधिमाजनि यान्तीं
प्राभवत् क इह नाम निषेद्धुम् ॥ ५५ ॥

इत्थमुक्तगुणयुक्तगिराथ
बोधितः सपदि कञ्चुकिनाऽसौ ।
भूपतेः कृतनतिरनुमत्या
प्रास्थिताश्रमवनं प्रति दूतः ॥ ५६ ॥

अथ सूचयन्नवनितिं मदसः
सहसा सदस्यमन उत्सुकयन् ।
किरणैः परिस्फुरदगतैश्चलताम्
उदभूत् समं सुषमगाङ्कुरवः ॥ ५७ ॥

अभिवादयन् गुरुजनान् क्रमशः
प्रमभाजयन् सवयसश्च सखीन् ।
प्रियभाषया च सुखयन्ननुगान्
समपासरत् स समितेर्नृपतिः ॥ ५८ ॥

अवलोकमान इव तत् कृतक्रियः
करसञ्चयं प्रकलयन् प्रभाकरः ।
नवरक्तया सविधवर्त्तिसन्ध्यया
सहितो विवेश चरमाचलोदरम् ॥ ५९ ॥

अखिलमवनिभर्त्तुस्तातदूतेन तेन
सममवहितकर्णालापमाकर्ण्य खिन्ना ।
सुमलिनवदनागात् कापि मुग्धा विदग्धा
चिरकृतवरिवस्यां रुक्मिणीं स्वां वयस्याम् ॥ ६० ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
पञ्चमः सर्गः ॥ ० ॥

———०  ॰॰  ०———



# षष्ठः सर्गः ।

हरगिरौ चपलामचलामिव
धवलमञ्चतले विलसत्तनुम् ।
अभिमुखींससखीं खलु सा सखी
समगमल्ललितां गलितालकाम् ॥ १ ॥

रुचिरदन्तरुचीमचिरोद्गतां
स्मितसितेन मता बहुलीकृताम् ।
मलिनमालिमुखं कुमुदप्रभम्
उपनयन्त्यलपन्नृपतेः सुता ॥ २ ॥

विजहतो सखि ! मां क्व गता कथं
हरति धैर्य्यमहो विरहस्तव ।
कुमुदिनी नलिनी च परस्परं
नहि विहाय विभाति निजाश्रयम् ॥ ३ ॥

श्रवणमुक्तिसुधा, दृगमाकृतिः,
असुखि शून्यमनः प्रकृतिस्मृतिः ।
हरति चाङ्गचयं परिरिप्सुता
सखिवियोगविषं विषमो रिपुः ॥ ४ ॥

मलिनता तलिना नलिनानने
विकसिते हसिते विसवत् सिते ।
सकललोकविलोभनलोकने
किमिति भाति यथोषसि सारसे ॥ ५ ॥

स्वयमुदेत्यथि ! यच्च परस्परं
न जनकादिषु तादृशमीहृदम् ।
सरसिजं सरसि स्थितमेव हि
हसति वीक्ष्य रविं निशि मीलति ॥ ६ ॥

इति निवेद्य तदा नृपनन्दिनी
करपुटे परिगृह्य निजासने ।
चिरमभिन्नतनुत्वमिवात्मनोः
परिनिवेदयितुं समवीवसत् ॥ ७ ॥

कृतपरस्परकण्ठपरिग्रहं
भृशमदोऽपि तदा युवतिद्वयम् ।
न तु युवा मिलितः खलु तत्र यत्
समुदपादि ततो नहि कण्टकम् ॥ ८ ॥

सरभसं परिरभ्य नृपाङ्गजां
गजकरोरुमभाषत सस्मितम् ।
चपलतोन्मदतामृदुताः स्वतः
शिशुयुवप्रवयःसु हि वीक्षिताः ॥ ९ ॥

तव किशोरि ! नु मातृमयोषिताम्
अवधिरेष परः परिरम्भणे ।
मयतनो युवको यदतः परम्
अधिकरिष्यति कण्ठमिमं तव ॥ १० ॥

सखि ! नवीनजनप्रियतागता
प्रमुदिता किमु नः प्रणयेश्वराम् ? ।
कमलिनी तरुणारुणपुष्पिता
तिरयति हि दलेन कुमुद्वतीम् ॥ ११ ॥

यदि सखित् प्राचरं सहचारिणी
तरिसुपेक्ष्य वियाम ता आगरम् ।
ननु तदा किमसौ न निवर्तते
सहचरत्वहतं किल सौहृदम् ॥ १२ ॥

विरहजोत्कलिका कलिका तव
तुदति मामुदजामिव यामिनी ।
मृदुसुखं नवदानविमोचिते
भजति भामिनि ! का क इवादरः ॥ १२ ॥

तव वियोगविभावनयानया
मम विषादकृताननलोलिमा ।
सुखशशी हि यदा हृदयोदयी
स्फुरति तव मुखे किल कौमुदी ॥ १४ ॥

इति निवेद्य महीपतिनन्दिनीं
कुलविषादवती सुदती तदा ।
विधुरिवाचिरकुन्दसुमे रुचं
विहसितं दशनेषु दिदेश सा ॥ १५ ॥

अथ यदा धरणीश्वरनन्दिनी
प्रववृते वदितुं विवृतान्तरा ।
मतिमती खलु तत्र मुखे श्रियः
पदमदाद्विषतीव सरस्वती ॥ १६ ॥

सकललोकविलोभिविलोकने
दशनभासि च चेतसि सुस्मिते
विशदताजनि, यौवनपूर्वतः
भवति सैव दशा हरिणीदृशाम् ॥ १७ ॥

कुलकलत्रजनेऽतिविरञ्जिनी
चपलता निरुपप्लवशैशवे ।
अवहति प्रतिकूलसमीरणे
चलति शैवलिनी किमुत क्वचित् ॥ १८ ॥

अनुचिता सखि हे ! खलु मत्तता
किमु दिनैकभवाऽभवदीदृशी ।
किमथवा दुरितायतनाश्रयात्
ग्रहपरिग्रह एष नवस्तव ॥ १९ ॥

किमपि कारणमत्र विनिह्नुषे
नहि तु धीरतरा तरलायसे ।
विजहती हि समीरसमीरणां
न चलति व्रततिर्न च निम्नगा ॥ २० ॥

परमतो महतस्तव कैतवात्
सुजन ! बन्धुजनेऽजनि यातना ।
अधिजिगांसुरुदन्तमिमं निजं
जलमृते व्यथते तृषितो यथा ॥ २१ ॥

प्रणयिनि ! प्रणयाम्यमुमञ्जलिं
द्रुतमुदन्तमुदीरय दन्तुरे ! ।
कियदुदाहृतसंहृतवाचिकं
तपति लिप्सितमन्तरमग्निवत् ॥ २२ ॥

इति निशम्य गिरं मधुराक्षरां
क्षितिपतेर्दुहितुः सुदती तदा ।
विदधती चिरसुस्थतदन्तरे
कमपि भावमथो नवमभ्यधात् ॥ २३ ॥

पुरत एव चराः सहजेन ते
मृगयितुं सुवरं विनियोजिताः ।
क्रमविवृद्धिमती कुलकन्यका
गुरुरुजा च भृशं सखि ! दुःसहा ॥ २४ ॥

अङ्काय निह्नुतकलालपितामृतः स
उत्तानमुत्तमवपुर्विनिधाय शिशेत्र ।
तस्मिन् पतिश्शुरबला विकसद्द्विहासा
सा पद्मिनि प्रशुशुभे स्फुटपद्मिनीव ॥ ६० ॥

आकाङ्क्षया सकलयोग्यतया च युक्ता
नित्यप्रसादमधुरा प्रियरीतिवर्णा ।
प्राव्हीव चारुरचना दयितोरसीयम्
आसक्तिमाप परमामुरसा निजेन ॥ ६१ ॥

उत्तानशायिनि नवे तरुणीजनेऽस्मिन्
यूनां चिरादुपरि सन्तरतामगाधे ।
अश्याविवोच्चपुलिने धृतमीनचिह्ने
पीनोन्नतौ घनकुचाववलम्बनाय ॥ ६२ ॥

नीचं गतस्य रमणस्य निराश्रयस्य
तावेव पाणिविधृतौ परमाश्रयौ च ।
सिन्धुं गतस्य पुरुवेगपरिप्लवस्य
कूटाविव क्षितिभृतौ नतिहस्तलभ्यौ ॥ ६३ ॥

हीनाश्रयः श्रयति यौ समदं रिरंसुः
शुष्काननः पिवति यौ च शिशुः पिपासुः ।
दृष्ट्वा च हृष्यति यतः सकलोऽबला तौ
स्वार्थं विना गुरुकुचौ दधती हि धन्या ॥ ६४ ॥

नास्ति स्तनो न च विलम्बितकेशपाश:
दूरं शिरो यदभूता बिभ्रयादियं सा ।
मान्द्यं गतैतुरपरिगा विपरीतरत्यां
वामा: किलात्र सुतरां सुरतेऽतिवामा: ॥ ६५ ॥

सन्दीप्तकाममधुरा विधुराऽधरस्य
पाने रते च तनुदीर्घतरप्रियेण ।
स्वोच्चस्थितेर्नियमत: स्वमुदीर्य्य कण्ठं
आश्वासिता प्रियतमा निपुणेन तेन ॥ ६६ ॥

आकुञ्चितोरुयुगले स्वनितम्बविम्बं
पश्चात् प्रविश्यति करद्वितयेन गाढ़म् ।
वामा प्रिये निजभुजौ विसवन्निधाय
वल्ली जलीव इव पाकघना ननर्त्त ॥ ६७ ॥

कान्तश्चुचुम्ब चुबुके, ललना कपोले
वस्तिं ममन्थ तरुणी, तरुणस्तदूरू ।
एकोत्मवान्तशयितं पुनरप्यनङ्गम्
अन्योन्यमोहशमिमावुददीपयाताम् ॥ ६८ ॥

क्वचिदज इव पश्चात् सम्मुख: क्वापि चोच्च:
क्वचन च शयित: सन् क्वापि चासीन एष: ।
रमणपरमदर्त्वा कान्तिकान्ताश्च कान्तां
स्वसदृशकृतवृत्तिं तोषयामास तुष्यन् ॥ ६९ ॥

फुल्लं मन्दं मलयपवनो व्याधुनोत् पुष्पजातं
पुष्पात् पुष्पाद्दिशि दिशि महासौरभं पर्य्यगच्छत् ।
केशे वेशे नवयुवतयः सौरभं प्रत्यगृह्णन्
तस्यां नव्या निशि समवसन् वा युवत्यां युवत्याम् ॥ ७० ॥

साङ्गोपाङ्गमनङ्गमुत्सवविधौ सम्भाव्य नव्या जनाः
केलिक्लान्तनितान्ततान्तकरणाः श्रान्ताङ्गनालिङ्गिताः ।
शृण्वन्तश्च निशानिशेषपिशुनं शङ्खस्वनं शोभनं
सान्द्रस्यन्दनमन्दमन्द्रमिलितं द्रागेव निद्रां ययुः ॥ ७१ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
सम्भोगशृङ्गारवर्णनो नाम
एकादशः सर्गः ॥ ० ॥

—*⁘*—



# द्वादशः सर्गः ।

——*⁑*——

शशिनि निशामुपभुज्य निलीने
परिशिथिलांशुकशालिनि शैले ।
उरसि दिनेशमुषा नवरागा
विजनवियत्तदियाय दधाना ॥ १ ॥

विटपिकुलायविलीनविहङ्ग-
कलकलिलो मृदुलोऽखिललोकान् ।
सुमधुरमङ्गलवाद्यनिनादः
युगपदजागरयत् सुजवेन ॥ २ ॥

कलकलनादितधीवरजालं
दृढमभिगृह्य तदा वरजालम् ।
झषवति वारिणि नीरदवर्णम्
अगमदुदीर्य्य गिरा रदवर्णम् ॥ ३ ॥

वियति वितत्य पतत्रयुगानि
भ्रमणपराः परितः किल चिल्लाः ।
अधितटमुल्लसितानणुमीनान्
द्रुतमुपगृह्य नगान्तमपप्तन् ॥ ४ ॥

विशति शनैः सलिलं गलशेषं
जननिकरे परिकर्षति जालम् ।
विचकितरोहितका इव धाना:
सपदि विपुप्लुविरे प्रतिकूलम् ॥ ५ ॥

अचलनलोचनमूर्त्तिरदोपि
जनतुमुलान्निभृते प्रतितिष्ठन् ।
क्वचन वकः परमेकविलक्ष्य:
मुनिरिव लब्धसवीजसमाधिः ॥ ६ ॥

शिशुशफरीं दधतं कलविङ्कं
वदनपुटेन मुदा विरुवन्तम् ।
नभसि जयन् करटोऽपजहार
नहि बलवान् सदसद्विविनक्ति ॥ ७ ॥

उपपुलिनस्फुरितं शिशुमीनं
सरभसमेत्य पतन्तमरिष्टम् ।
द्रुपदसुतान्वितसिन्धुमहीन्द्रं
परकरटोऽनुययाविव भीमः ॥ ८ ॥

स्थिरनयनभ्रमिभिः समयानैः
परिपतनैः सहसाक्रमणैश्च ।
विहगगणो गगनोपरि राजन्
अकृत सरस्तुमुलं घनरावो ॥ ९ ॥

पथि परितः परितस्तरिरे गां
प्रतरुचिरे रुचिरेऽपि च कूले ।
अतिविकले विकले सलिले च
जनविसरा विसराजिनि केचित् ॥ १० ॥

वसनतले पृथुले पृथुरोमणि
चलति भृशं चलितं सहयक्ष्म् ।
विजनपथेन पटच्चरमारात्
नृपतिचरः प्रजहार विहृत्य ॥ ११ ॥

क्व तनुतमा जनभोजनवृत्तिः
क्व तनुमताञ्च वधः प्रचुराणाम् ।
परमणिचूर्णलवैर्विमतीनां
निजमखमार्जनमत्र न चित्रम् ॥ १२ ॥

सुचिरचलाचलमीनसमुद्गं
पुरि शतशो नृपतेरुपनीतम् ।
अतिमलिनापसदो पशुनाशे
प्रमदवतीव दधे यमदूतो ॥ १३ ॥

अधरचिकीर्षया निरहीतः
झटिति सहस्ररदः करशाखाः ।
उरु विदधन् विजहेऽथ कयाचित्
विधुवति काः प्रतिवैरसमर्थम् ॥ १४ ॥

धृतकवजो द्रुहतो दृढपुच्छ-
परिधुननैर्विनिनाययिषन्त्याः ।
दृग्मि विचकार च भस्मनिकायं
अपनपराऽप्यमुचन्न तमेका ॥ १५ ॥

क्वचिदधिवैणवखण्डगमिक्य
स्फटिकघनानि दधीनि दधानाः ।
सुसदृशगोपजना विशिखायाम्
अभिपततो मनुजानतिपेतुः ॥ १६ ॥

ललितचतुर्विधभोज्यपदार्थान्
नृपभवनानि बहून्युपनिन्युः ।
समवहिता हितकर्म्मणि राज्ञः
पुरु पुरुषाः प्रतिवस्तु ररक्षुः ॥ १७ ॥

विविधमयान यथेप्सितमन्नम्
अललितमप्यलमेव ददस्व ।
अपि वसुधेशवसूनि गृह्णाण
स्वमतिमतानि तदा मतिमन्तः ॥ १८ ॥

सुभगतया तुलिता किल कन्या
तदुपमिता नृपमानसवृत्तिः ।
इदमनुरूपतयातिमहः सः
तदनुगुणश्च जनागम आसीत् ॥ १९ ॥

अथ विपदः पदमत्र भविष्यत्
किमपि विशङ्क्य कलङ्कनिदानम् ।
प्रतिविदधे पुर एव स रुक्मो
गहनगमो नहि किं श्रयतेऽस्त्रम् ॥ २० ॥

कृतशपथाः सुपथे नगरस्य
निविविशिरे पुरुषा धृतशस्त्राः ।
प्रतिभटगन्धमनाप्नुवतोऽपि
धरणिपतेः किमियं पृथुसज्जा ॥ २१ ॥

अयमसतोऽपि जनीमुपगच्छन्
श्रणुमतगौतमदर्शनदर्शी ।
स्थिरतरभावुकभावुककर्म-
स्वशिषदशेषसुभीषणसज्जाम् ॥ २२ ॥

विकमितनम्रतनूरसियष्टिः
श्रचिरुचिरुम्मृदुला च कृशाङ्गी ।
जिगमिषुमीषदपि प्रविलोक्य
बलवदकम्पयदाहितकम्पा ॥ २३ ॥

सशरशरासनधारयितारः
विवभुरुरश्छदगूढशरीराः ।
सशिवशतैकसहस्रवपुर्धाङ्गा
इव सदृशाः पुरुषा युगमानाः ॥ २४ ॥

ग्रसितुमिव द्विषतो विवृतास्याः
धृतगुडिकाः सहचक्रशतघ्नीः ।
परि परिखां समया वरणान्ते
सुहृढमवीविशदन्तिकसैन्याः ॥ २५ ॥

बुबुधिरे एव यथा दलरावात्
अवरुधिरेऽत्र तथा घनसैन्याः ।
न तु विविदुर्विदितागतिकन्या-
पुरविपिने हरिमद्रिगुहावत् ॥ २६ ॥

सहगुलिकं नलिकं सुविशालं
विलपतितर्जनिकामिव बिभ्रत् ।
निजपरिलोकनमात्रविभीत-
व्यपसृतलोकमलोकि च लोकैः ॥ २७ ॥

अनिलविलोलनिचोलनिगूढं
नवललनोरुमभीक्ष्य बभूव ।
कनकगदामिव कोषनिविष्टां
कुसुमशरस्य भयाज्जड एकः ॥ २८ ॥

अतिचकितः परितः परिपश्यन्
असिमुपवेश्य च चर्मणि सद्यः ।
गणतरुणीमभितः समुपेतां
समलपदीषदभीप्सितमन्यः ॥ २९ ॥

अयनमुपागतमीशनिविष्टं
शकटमतोच्चामलं प्रतिषिध्यन् ।
विचकितसूतगृहीतधन: सन्
अनुमुमुदे गमनाय च कोऽपि ॥ २० ॥

चतुरतमोऽथ चिरन्तनसेना-
पतिरसजत् समितिप्रणिधायी ।
तुरगगतोऽखिलसैन्यततीनां
समवदधे सकलं किल तत्त्वम् ॥ २१ ॥

अथ तुहिनाद्रिगुहामिव पूर:
सुरसरित: पुरमुच्चगभीराम् ।
निजनिजचिह्नचितो रथवार:
सधृति विवेश विशेषसुवेश: ॥ २२ ॥

सपदि पदा पुरगोपुरवर्त्ती
विनयनयौ मतिमानपि रुन्धौ ।
करयुगलेन रथस्थितिमात्रम्
अदधदभीषुमशान्तहयस्य ॥ २३ ॥

विदितपरस्परवैभवमानौ
युगपदुभावपि नेमतुरेतौ ।
भवति समानगुरु: सममन्या
कियदुदिता तु तुला लघुताभाक् ॥ २४ ॥

नृपतिमनामयमात्ममनाः सन्
अपि शुभमागतमित्यपि पृच्छन् ।
कमपि नियोज्यममुष्य नियोज्य-
परिषदमैरिरदेष विशिष्टाम् ॥ २५ ॥

पुरमुखतोरणनिम्नविभागे
विशति रथे जनसङ्कुलदुर्गे ।
द्रुतमवतीर्य्य च पृष्ठचरण
ततिरुदसारि पथो विमनस्का ॥ २६

ललितलयान्वितदुन्दुभिवेणु-
मुरजमुखध्वनितं कणशोऽथ ।
अरपितमुच्छ्रवणैरतिदूरात्
अवहितपौरजनैरनुभूतः ॥ २७ ॥

स कलकलः क्रमशः सविधः सन्
समसुलभां गुरुतां लभमानः ।
समसुरसा दुहितुः क्षितिपस्य
नगरमकम्पयदाहितमोदम् ॥ २८ ॥

स जनगणः स्फुटतामुपगच्छन्
अनवरतध्वनिभिः श्रुतियुग्मम् ।
नवनृपतेर्नयनेऽतुलवेशैः
प्रमदरसैश्च मनः प्रपुपूरे ॥ २९ ॥

अथ पृतनां सकलो विलुलोके
मञ्जितमञ्जिभशताङ्कपताकाम्।
मकरवतीं तपनातपटीम-
तरलतरङ्गततिं तटिनीं वा ॥ ४० ॥

अविकलपूर्णरुचिः स्वगणेन
सदृशरुचा च वृतः सुमहार्घैः।
स्रज इव मध्यमणिः शिशुपालः
समुचितसूत्रधरः समुपागात् ॥ ४१ ॥

स विपुलमण्डनमण्डितमूर्त्तिः
नवनृपतेरकरोदतिरागम्।
स्वयमधुना च वहन् गुरुभारं
व्यधित नतानि शिरांसि परेषाम् ॥ ४२ ॥

विधुरिह पूरयते चिरमुद्यन्
जलधिमलं कियतीमपि नाशाम्।
समुदित एव स भीष्मकसूनोः
युगपदपूरि मनः पुनराशाः ॥ ४३ ॥

सविधमुपेयुषि चेदिनरेन्द्रे
पृथुतरसिंहनिनादितसैन्ये।
सपदि विदर्भपतेरपि ढक्काः
प्रतिजगदुः प्रतिनादछलतस्तम् ॥ ४४ ॥

शिशुललनाजनमुद्विजमाना
समुदितवीरमनो मदयन्ती ।
अतितुदती श्रवणञ्च नराणाम्
असकृदगर्जदनेकशतघ्नी ॥ ४५ ॥

गमनवतीं महतीं वरसेनां
प्रथमसुसज्जितरुक्मिचमूः सा ।
अभिपतितां तटिनीव तिरश्ची
सकलकलं सरितं समगच्छत् ॥ ४६ ॥

अगणितलोकगणान्तरयाती
निजरुचिरोचितचारुमरीची ।
अधिमणि चेदिविदर्भनरेन्द्रौ
विमलमणीव शुभं शुशुभाते ॥ ४७ ॥

परमवलोकयतः शिशुपालं
धरणिपतेः प्रमदो हृदि यावान् ।
नृपदुहितुस्तु जनाद्भुतवत्याः
तदधिक एव बभूव विषादः ॥ ४८ ॥

प्रमदिहृदोरितरेतरमूर्त्तौ
अभिगमनाय परस्परपाणौ ।
विरचयितुं स्वमादिव सेतुं
दधतुरुभौ पुलकाञ्चितदेहौ ॥ ४९ ॥

अविरतमालपतोर्ललितैलां
दशनमितांशुततेरभितोऽपि ।
उपरि विलोलविलोचनभृङ्गं
वदनसरोजयुगं प्रचकाशे ॥ ५० ॥

समितिसमीपमुपेतमथासुं
सुरभिसमेतमनोजसमानम् ।
युगपदवेक्ष्य ससम्भ्रममाशु
सदसिसद: सदस: समुदस्थात् ॥ ५१ ॥

पटलतलात् प्रहिता वनिताभि:
धृतरजतातपवारिणि लाजा: ।
स्थितिसमयाविदिता जनमार्ग:
प्रविविदिरे परितो निपतन्त: ॥ ५२ ॥

नरनिकरा: प्रचुरं जयशब्दं
द्विज न-गणा: परमाशिषमस्य ।
नवललना अतिमाधुगिरश्च
प्रति शिशुपालमजस्रमकार्षु: ॥ ५३ ॥

ललितललाममणिप्रचयेन
विरचितमासनमेष समेत्य ।
उदयशिलोच्चयशृङ्गमिवेन्दु:
सुचिरमरोचत राजसमाजे ॥ ५४ ॥

नवविपणीतरुणीगणपाणि-
विचलितचामरचञ्चलचूडः ।
अनिलविलोलशिरोलतिकालिः
परिषदि मेरुरिव प्रदिदीपे ॥ ५५ ॥

मणिमयमण्डनबिम्बितदेहान्
कुतुकक्षतस्मितशोभिमुखाब्जान् ।
पृथु पृथुकान् प्रवहन्नभिव्यक्तान्
स्फुटमभवत् स तदा शिशुपालः ॥ ५६ ॥

ललितविकस्वरसुस्वरशाली
महदभिनन्दितवन्दिसमूहः ।
पिक इव पञ्चमगो मधुमत्तः
नवनवगानगणैरनुवृत्तम् ॥ ५७ ॥

अविरलपङ्क्तिकृतैर्जनवर्गैः
विततवितानचयैश्च दिनेऽपि ।
क्षणमभवत् क्षणदाभ्रमकारि
सतिमिरमङ्गलमाकुललोकम् ॥ ५८ ॥

सदसि च चेतसि चोपगतानां
सपदि सुहृामसदुर्बहुदीपाः ।
सह सुतया जरतः क्षितिभर्तुः
घनतिमिरं तदगाच्चलचित्ते ॥ ५९ ॥

स्वसुखसुदोर्विंधये विविधासु
कतिषु सतीष्वपि रुक्मिजनानाम् ।
स तु विषसाद हृदा शिशुपालः
पिशुनयते स्वमनो हि भविष्यम् ॥ ६० ॥

भूयिष्ठभूषणविभूषितमञ्जुमूर्त्तीन्
वामागणानिव निरीक्ष्य वरं दिदृक्षन् ।
सिन्दूरसुन्दरमुखो विरलान्धकार-
वेला विलोकितुमिवोपजगाम सन्ध्या ॥ ६१ ॥

परिषदि परिपूर्णं भूरिमम्भारभारं
समुदितवरलक्ष्मीराजितं चेदिराजम् ।
प्रमुदितमति पश्यन् भीष्मारां स्वसारम्
उदयितुमिह रुक्मी रुक्मिणीमादिदेश ॥ ६२ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये शिशुपालागमनं
नाम द्वादशः सर्गः ॥ ० ॥

———•⁂•———



# त्रयोदशः सर्गः।

अपरां भजन् दिनमणिः क्रमशः
विगतप्रभावमहिमा समयात्।
अकरोत् प्रदोषमपि सन्तमसं
स्वयमस्तमाप च मलानुसृतः ॥ १ ॥

नियतिं न कोऽपि जगति क्रमितुं
क्षमते विधूतपुरुषक्षमताम्।
उपरि भ्रमन् त्रिजगतां नयनं
सविता विवेश चरमाद्रिगुहाम् ॥ २ ॥

विलयं गते दिनपतावसकृत्
जहती दिनद्युतिरपि स्वसनम्।
विकलस्वना मलिनकान्तिकला
सहगामिनी समभवत् सहसा ॥ ३ ॥

उदयाचलं चलति चन्द्रमसि
नवतारका मृदुनहामकृतः।
क्रमशः प्रतिस्वमिव वेष्टयितुं
प्रियमाश्रयं समुद्गुडुगणे ॥ ४ ॥

सहचक्रवाकमिथुना नलिनी
सहकौशिका कुमुदिनी च तदा ।
रुरुदे जहास च समायतना
न विधेर्विधिर्भवति नित्यसमः ॥ ५ ॥

पुरयोषितां हुलुरवैरुरुभिः
शुभगीतिभिर्विविधनादचयैः ।
मिलितः कलः कलकलैः कलिलः
सहसावरोधनगरादुदगात् ॥ ६ ॥

सततस्वनैर्वधिरितश्रवणः
जनसङ्कथामतिसमीपजनः ।
तटिनीनिमग्न इव वृष्टिकणां
कियदन्वमात् कियदपि व्यशृणोत् ॥ ७ ॥

परमम्बिकासदनगामिरुतिम्
अभिनिःसृतां नृपसुतां प्रविदन् ।
रणपारदृश्वपृतनामभि तां
झटिति न्ययुङ्क्त वसुधाधिपतिः ॥ ८ ॥

परिमुक्तकाशितशितासिधराः
पथिपार्श्वयोर्निपुणसैन्यगणाः ।
महदध्व तत्र परिरेफभृतः
समपङ्क्तयो जल इव द्विगुणाः ॥ ९ ॥

सुषमासमालियुगलान्तरगा
पदचारिणी सपदि राजसुता ।
मुखमञ्जरी किसलयानुसृता
नवकेतकीव सरणिं निरगात् ॥ १० ॥

ललनासु तामतुलनां ब्रुवती
परमाकृतिः सुकृतिजातकृता ।
उदिता समक्षमवलोकयतां
समजीजनन्मनसि तर्कमिमम् ॥ ११ ॥

इयमेव हन्त कमला विमलात्
स्वपदादधो हि कमलं कमलम् ।
अबुधान् प्रबोधयितुमर्थममुं
सुचिरान्न चारयति तत्र पदम् ॥ १२ ॥

सुपदे स्थितान्नखविधून् दश तान्
विमदान् विलोक्य चिरचिह्नचितः ।
उषितः पराजयभयादपदे
विधुरेक एष किमु शून्यमगात् ॥ १३ ॥

ननु वस्तुतत्त्वजड़ ! वाङ्निपुण !
कविसार्थ ! निश्चिनुत कोपमितिः ? ।
समधर्म्मवत्त्वमिति चेत् कदलीं
ललनोरुणा तुलयतीह कथम् ॥ १४ ॥

अमुनोरुणा प्रभुरतिप्रभुणा
मसृणेन तप्तकनकच्छविना ।
पशुभोगकृत् सुकठिना विरुचिः
कदली हि कुत्सिततया दलिता ॥ १५ ॥

अथवा विजित्य जगतां त्रितयं
सकलं स्मरेण किल भीषयितुम् ।
निहितं स्वमन्दिरमुखे कनक-
गदयोर्द्वयं न तु तदूरुयुगम् ॥ १६ ॥

यत उद्भवो मनसिजो जनिभू-
समवस्तुशालियुवतीर्जगति ।
निजजन्मभूरुचिरतां गदितुं
स्फुटिताश्चकार किमु वर्ण्यमिदम् ॥ १७ ॥

अथवा यतः प्रभविता मदनः
मदनत्वमस्य किमु वाच्यमपि ? ।
जनयन्ति कारणगुणा हि गुणं
ननु कार्य्यवस्तुनि जगन्नियमात् ॥ १८ ॥

रसनासनीकृतनितम्बयुगं
कनकाभमिष्टरुचितं मसृणम् ।
सुतरामराजदिव कामसरि-
दधिरोहिणीपरिगवेदियुगम् ॥ १९ ॥

पृथुलोन्नतौ नवनितम्बकुचौ
निखिला नुवन्त्यतितनुं न तु माम्।
इति चिन्तयेव चिरसन्ततया
क्षमतां मध्याङ्गममभूदुदरम्॥ २०॥

परितो विधुय जगति स्वजयं
कुसुमेषुणा किमपि विश्रमितुम्।
कलधौतदुन्दुभियुगं निहितं
परिवर्त्त्य वक्षसि कुचौ न तु तौ॥ २१॥

सुतनुस्तनूरुहचयः सुतनोः
नतनाभितः स्तनगतः सरलः।
भवने स्मरस्य च विहारवने
पदवी बभाविव गतागतयोः॥ २२॥

कमलं किलोपरि मृणालमधः
इयमेव रीतिरिति चेत् किमियम्।
विचरन्त्यधोमुखचलन्नलिन-
द्वयवन्मृणालयुगलं वहते?॥ २३॥

नवपल्लवो व्रजति पल्लवतां
मृदुलं न विद्रुमदलं विमलम्।
सुरसं न विम्बमपि वा न ततः
तुलना मृदौ तदधरे मधुरे॥ २४॥

अतसीप्रसूनरुचि रम्यतलं
सुतनोः कपोलयुगलं ललितम् ।
निचितं लसत् कनकचूर्णचयैः
पृथुलं प्रवालफलमन्वकरोत् ॥ २५ ॥

न तुला तिलस्य कुसुमेन यतः
सुदृशो नसोऽतिविषमेण समम् ।
विफलोपमा तदिह सा त्वभितः
वदनोचिता भवति येन तया ॥ २६ ॥

यदि दृष्टिशक्तिरसिताब्जदले
हरिणीदृशो सरलता यदि वा ।
ननु तेन तेन च तदा विपुलम्
उपमीयतां नृपसुतानयनम् ॥ २७ ॥

मृदुमानितम्बपतितं कुटिलं
कचहस्तमस्तनिजकेशरुचिम् ।
त्रपया विलोक्य चतुरा चमरी
समशिश्रयत् समजनामटवीम् ॥ २८ ॥

सुतनोस्तनोर्विनिहिताभरणं
निखिलं तिरस्कृतिमिवाजनयत् ।
स्फुटमारसे सहजमञ्जुतमे
परिरञ्जनं खलु विरक्तिकरम् ॥ २९ ॥

इयमेकला कुसुममात्रकरा
पृथुका प्रसूनसुकुमारवपुः ।
बहुयोधिनो बहुविधायुधिनः
समसूमुहत् सरलयैव दृशा ॥ ३० ॥

सुषमाप्रवाहमधुरा मधुरा
पथि संवितीर्य्य सहसा सहसा ।
अखिलाखिलांशमुदिता मुदिता
चलिता तदेव चपलाऽचपला ॥ ३१ ॥

अथ रुक्मिणी सहचरीहितय-
सहगामिनी परमभक्तिमती ।
विहिताञ्जलिः क्षितिधरेन्द्रसुता
सदनं समेत्य किल तामनुवत् ॥ ३२ ॥

प्रकृतिः सती त्वमसि सत्त्वरज-
स्तमसां समानमिलनप्रकृतिः ।
अवबोधयन्तव महत्त्वमलं
महदद्भुतं समभवत् प्रथमम् ॥ ३३ ॥

पुरुषेण येन चिरयत्नवता
सकृदीक्षिता गुणवति ! प्रकृते ! ।
सविधं प्रयासि नहि तस्य पुनः
कुलकामिनीमनुकरोषि किमु ? ॥ ३४ ॥

प्रसुवत्यपि त्रिभुवनं पुरुषः
वहसे च सङ्गरहिताप्यखिलम् ।
गुणवर्जितापि सगुणा प्रथसे
तव तत्त्ववित्र खलु कश्चिदपि ॥ २५ ॥

जननि ! त्वया सचिवयाधिकृतात्
परमात्मनो वियदिदं समभूत् ।
अथ भूतमन्यदमुतश्च जगत्
त्वमतः स्मृताखिलजगज्जननी ॥ २६ ॥

अथवा त्वमेव परमात्मतया
विदिता स्वशक्तियुगलाधिकृता ।
भजसीश्वरादिविविधामभिधां
वनपादपादिसमिताम्बरवत् ॥ २७ ॥

त्रिविधस्वरोच्चरितमन्त्रमयीम्
अवपुष्मतीं भगवतीं भवतीम् ।
स्वरलेशमप्यविदुषी विमतिः
शिशुरङ्गना ननु नुयात् किमियम् ? ॥ २८ ॥

अयि कष्टकर्मरहितोऽखिलवित्
समयाविशिष्टविभवः पुरुषः ।
भवतीति ते सकलसिद्धिकर-
प्रणिधानयोग्य इह नैष जनः ॥ २९ ॥

तव वाचकं प्रणवमात्रमहो !
महिला तु तन्न वदितुं क्षमते ।
अपि नासि वाङ्मनसयोर्विषयः
तदियं नभःकुसुममेव नुतिः ॥ ४० ॥

इति ते परस्परविभिन्नधियः
मुनयोऽम्ब ! रूपमनिरूप्यमिदम् ।
अशरीरशब्दमिव दूरगतं
स्वमनोऽनुरूपमसमं ब्रुवते ॥ ४१ ॥

रणभूः पुरा तव पदं स्पृशती
दनुजद्रुता शिवमवाप यदि ।
सुरवैरिपाणिभयगाद्य तव
प्रपदं श्रिता, मम शिवं कुरुतात् ॥ ४२ ॥

तव सन्त्यनन्तकजगन्ति तनौ
न जहासि तानि गुरुभारधिया ।
सुमनो नितान्तमणु मन्निहितं
पदसारसात् किरसि किं विरसा ॥ ४३ ॥

मृदुबाल एव बलवानपि सः
कथमुत्तरेत् प्रचुरवीररणात् ।
विहरन् पुरन्दरदिगङ्कतले
तिमिराणि हन्ति नु कियन्ति रविः ॥ ४४

इह नो हरेद्‌यदुपतिर्यदि माम्
अथवा स्पृशेत्तृषितचेदिपतिः ।
त्वमतः सतीत्वविगमान्न सती
शिरसां मणिः किमु पुरा व्यथसे ? ॥ ४५ ॥

पदपङ्कजं हरिरिह प्रददौ
इति भाषितं न खलु विश्वमिमः ।
कमलाकरान्तरविहारिकरो
न करोति दृष्टिमपि वृष्टिजले ॥ ४६ ॥

अनुपागतं हरिमुपागमय
ननु शक्तिरूपवति ! भक्तिनतम् ।
कलहायमानमधितिष्ठ हरिं
त्रिदशद्विषामिव पुरा समरे ॥ ४७ ॥

अनलानिलाम्बरधरासलिलं
सकलं किल त्वमसि देवि ! जगत् ।
अनुरूपरूपनिकरैरिमकैः
अनुकूलयस्व कुलकुण्डलिनि ! ॥ ४८ ॥

अतिचण्डचण्डहतिहेतुतमः
तव चण्डिमा भजतु चण्डि ! हरिम् ।
सुकुमारनूतनतनुः क्व हरिः
विकटा भटाः क्व च नु लौहघनाः ॥ ४९ ॥

लभतामजीवनिमसावममः
कमिताद्य मां विमतिचेदिपतिः ।
सवदक्षिणामपजिहीर्षुमलं
न जनङ्गमं प्रहरतीह हि कः ॥ ५० ॥

जगदम्बिकापदसरोजयुगे
भ्रमरायितं विदधती हृदयम् ।
युगपद्विषादसुखमध्यगता
तदगारतो विनिरगात् सुदती ॥ ५१ ॥

हरिरेष्यतीति मह्तो मुदिता
क्षणमुत्प्रफुल्लपना ममगात् ।
कथमेष्यतीत्यतिविषादवशात्
मलिनानना च विकला न्यवृतत् ॥ ५२ ।

अभितो वृतापि धृतशस्त्रचयैः
विभयाश्चकार पथि रक्षिभटैः ।
चलिता समेन चलदुगमना
विमना मनाक् स्मृतिमतीतवती ॥ ५३ ॥

चपलामिव प्रचलितामनुकीं
समबोधि नाप्यवहितः पुरुषः ।
सुषमा सुरा च रसगौरविणी
जनचेतनापहरणी सुसमा ॥ ५४ ॥

नृपकन्यकारुचिरतानुभवात्
जनचक्रमालिखितवद्विभौ ।
स्थलमीदृगध्वनि बभूव यथा
क्षितिपाति कत्तृणमपि व्यरणीत् ॥ ५५ ॥

हरिरन्तरेऽत्र समदं चकितं
सविशङ्कमप्यनुरथं प्रचलन् ।
क्वचिदुज्झितध्वनि शनैः क्वचन
सजवं ययौ तदयनाभिमुखः ॥ ५६ ॥

पथिपार्श्वतः पथि रथोपहितः
रभसादुपेत्य घनसैन्यततेः ।
अनुतो रराज रजनीशकरे
इव दीपधामनि स नीलमणिः ॥ ५७ ॥

प्रयती नरेन्द्रदुहिता सुचितं
सुचिरान्मनोरथशतेन रथे ।
चकिता विलोक्य किल विश्वसितुं
हरिरित्यसौ न सहसाऽसहत ॥ ५८ ॥

मिलनागमे नयनयोरनयोः
युगपन्मनो बलवदुच्छ्वसितम् ।
तटिनीप्रपातसमयेऽम्बुनिधौ
उभयोरिवातिजवमोघयुगम् ॥ ५९ ॥

चिरचिन्तितं हृदयदैवतवत्
पुरु रूपमद्भुतमसेचनकम् ।
अवलोक्य लोचनसुधाञ्जनवत्
परिचिक्यतुः शुभमुभावुभयोः ॥ ६० ॥

पलमात्रदृष्टिकलया सकलं
चिरजीवभावमितरेतरयोः ।
वदतः स्म तौ हि निपुणं नयनं
वचसामगोचरमपि प्रथते ॥ ६१ ॥

गुणसंस्तवात् सुचिरमङ्कुरितः
सुदृशा समक्षमधुनेक्षणतः ।
उदितः स्मिते हृदयराग इव
व्यतनोत् प्रभामधरयोरुभयोः ॥ ६२ ॥

प्रथमावलोककृतमुग्धहरी-
प्लवमानदेहलतिका सरला ।
हरिमाधुरीमसुदयोपगमात्
उदतोलयल्ललितदक्षकरम् ॥ ६३ ॥

अथवातिमञ्जुलममुञ्जगति
परिरभ्य सार्थकमभून्नयनम् ।
किमहं जडः ? पुलकजालचितः
इति चिन्तयन्निव करोऽभ्युदितः ॥ ६४ ॥

जगति त्वयोः सुषमयाऽसमया
विमनीकृतान् हृतचितश्चतुरः ।
पुरुषान्निहत्य रथसम्मुखतः
स पुरःसरः समसरत् सरथः ॥ ६५ ॥

किमयं स्मरः ? स खलु पुष्पधनुः,
किमु चेदिराट् ? स तु सभाधिगतः ।
उत भूपतिः ? स किमु हन्ति निजां
समतर्कयन्निति जनाः कतिधा ॥ ६६ ॥

अथ फुल्लपाणिनलिनं तलिनं
जितकाञ्चनाभरणकान्तिमसौ ।
परिगृह्य विद्युतमिवाम्बुवहः
वहतीतमां प्रियतमां स्म रथम् ॥ ६७ ॥

स्यन्दनोपरि परीतरुक्मिणी
कृष्णसम्वलितकामनीयकम् ।
तप्तहेमनवनीलरत्नयोः
मिश्रितां श्रियमशिश्रियत्तदा ॥ ६८ ॥

परं परावर्त्त्य गताङ्गमिङ्गितात्
स दारुको दारुणवेगितं हरेः ।
प्रधिप्रमर्द्देन विमर्द्द्य पञ्चषान्
जनान् युयुत्सून् सजवं ययौ ततः ॥ ६९ ॥

व्याहर्त्तुमद्य ननु पद्यसमूहमेनं
यावानभूत् किल मया समयोऽपनीतः ।
सञ्जीभवज्जनगणास्त्रविसर्गकाल-
सम्पादिते तु हरणे हरिणा न तावान् ॥ ७० ॥

सुखं हरिर्वरगमिनीं जहार च
जघान चाक्षतकरणो भटानिमान् ।
इतो महाकलकलमाकुलोल्वणा
सरिज्जलभ्रमिरिव साऽकरोद्भ्रमूः ॥ ७१ ॥

हरिर्हरति रुक्मिणीं किमिति हन्त नः पश्यताम्
हरिर्हरति रुक्मिणीं वदत तूर्णमुर्वीपतिम् ।
हरिर्हरति रुक्मिणीं किमु भवाः स्थ निस्पन्दनाः ?
हरिर्हरति रुक्मिणीं निहत भिन्त रुन्धाग्रतः ॥ ७२ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये रुक्मिणीहरणं नाम
त्रयोदशः सर्गः ॥ ० ॥



## चतुर्द्दशः सर्गः ।

—*※*—

तत्र यात्यथ यथा सभां रवे
सम्भ्रमः समभवत् सभासदाम् ।
ह्लादिनी क्षितिविदारदारुणा
यद्यपश्नदपि नैव तादृशः ॥ १ ॥

उच्छ्वसन्नपि रदच्छदं दशन्
पर्यायन्नरुणलोचने मुहुः ।
धूनयन् सकलसंसदङ्गनं
पार्थिवो युगपदुत्थितोऽखिलः ॥ २ ॥

रोषरुद्धवचनोद्यमो ज्वलन्
कोऽपि न प्रथममुक्तिमाददे ।
केवलन्तु पुटपाकसन्निभः
सम्बभौ सुभृशतापितान्तरः ॥ ३ ॥

दन्तवक्र इति नाम भूपतिः
स्तम्भकं करतलेन ताडयन् ।
आह्वयन्नखिलराजमण्डलं
सञ्जगाद घनगर्जनस्वनः ॥ ४ ॥

हन्त भो यदि फणावतः प्लवः
मूर्द्धरत्नमपहर्त्तुमर्हति ।
तुच्छजीवनजनिः स गच्छतु
मानहानिमलिनाननो बिलम् ॥ ५ ॥

पन्नगः खगपतेर्निपत्य चेत्
चञ्चुसञ्चितसुधाघटीं हरेत् ।
उच्छिनत्तु स वरं निजच्छदं
मज्जतूत सुचिरं सरिज्जलम् ॥ ६ ॥

आहरेत हरिणो हरेर्यदि
जाग्रतोऽपि रसनां रसक्रमः ।
वेधसं स मृगयन् मृगेन्द्रतां
सञ्जहद्भवतु मन्दिरोन्दुरः ॥ ७ ॥

सन्निपत्य च पतङ्गपोतको
लेलिहानविपुलानलार्च्चिषम् ।
संग्रसेच्चतुरसञ्चरो ध्रुवं
कोऽप्यचिन्त्यसमयोऽयमागतः ॥ ८ ॥

नीरधिं पिबति चेत् पिपीलिका
सम्भनक्ति चटकोऽचलञ्च वा ।
नो तथापि शिशुपाललालसां
गोपभक्तधृतजीवनो हरेत् ॥ ९ ॥

मानहारिहरिहारितौजसः
सञ्जहौत जड़राजराजयः।
अथ रत्नमुकुटं कटुप्रभं
गौरवास्तनतमस्तकाद्द्रुतम् ॥ १० ॥

चेज्जलं ज्वलयती वनं नवा
सेकमेव तनुते तनूनपात्।
अथ भीष्मकसुतापहारतः
तत्र चित्रमपि सागरौकसः ॥ ११ ॥

लाघवाद्व्रजति सर्वमुच्चतां
गौरवाच्च ननु नीचतां पुनः।
मानदण्ड इह तन्निदर्शनं
वस्तुतस्तु विपरीतिराहवे ॥ १२ ॥

नीलवृत्तिरनिशं जलाश्रयः
मर्द्दितो व्रजति यस्तु नम्रताम्।
तत्र को न कुरुते पदक्रमं
कर्द्दमं दलयते हि गौरपि ॥ १३ ॥

शश्वदुन्नतिरतीवदुःसहः
आहतो द्विगुणमेधते तु यः।
तं न मानयति को महस्विनं
पावकं वहति मूर्द्धनीश्वरः ॥ १४ ॥

दारयन्तमुरसि स्वसिद्धये
दूषयन्तमपि वा बिभर्त्ति यः ।
पादपातमरवं सहेत सः
भूमिरत्र नितरां निदर्शनम् ॥ १५ ॥

कण्डूयनजसुखो हरिर्जटां
स्वां समेत विलिखन्तमुन्दुरुम् ।
मानहान्यशनिघोषवत्सत:
किं क्षमध्वमिह रुक्मिणीहरम् ॥ १६ ॥

यः प्रतापयति तेजसा जगत्
तं दधाति शिरसा महानपि ।
भास्वतः सकलशैलशाखिनः
पादमुद्धधति फुल्लविग्रहाः ॥ १७ ॥

अद्य राजतनयाशशिप्रभां
द्रागपाहरत कृष्णनीरदः ।
राजराजिवदनप्रदोषकं
सोऽन्धकारनिकरः समश्नुते ॥ १८ ॥

यः स्वयं ज्वलति भूयसौजसा
नो सहायमयमर्थयेत् क्वचित् ।
काननं दहति जातवेदसि
मारुतो वहति पूर्वतोऽधिकम् ॥ १९ ॥

यस्तु वा प्रणमते किलात्मना
तं लघुं निजजनोऽपि मुञ्चति ।
ओघभग्नपतितं तटद्रुमं
सञ्जहाति चिरसङ्गतस्तरुः ॥ २० ॥

अर्पयन्नुरसि साहसात् पदं
यो विकर्षति पतन् दृशं भृशम् ।
अन्तरेण कुणपं मह्येत तं
को विचेतनमुद्भिरितक्षणः ॥ २१ ॥

अद्य विद्युतितवेद्युतद्युतिं
मूर्त्तकीर्त्तिमिव रुक्मिणीं हरन् ।
सासुरेव यदि यादवो व्रजेत्
यान्तु तत् पुरत एव नोऽसवः ॥ २२ ॥

लिप्सते वधमरेर्यदि स्वयं
ध्वंसयत्यनुदितोऽपि तं सुहृत् ।
पूर्वपर्वतशिरस्तमोनुदि
नो गतेऽपि हरतेऽरुणस्तमः ॥ २३ ॥

मानिनः परकृता तिरस्कृतिः
क्षीयते न बहुनाप्यनेहसा ।
दक्षशापकृतलक्षणं विधोः
लक्ष्यते तदधुनापि तुल्यवत् ॥ २४ ॥

प्रश्रयाः स्थिरतया समस्यया
सम्मदेन सह गौरवेण च ।
रुक्मिणीमपहरन्नयं हरिः
अद्य नो नु किमरक्षदक्षतः ॥ २५ ॥

उच्चहीनजलवृत्तयो जनाः
नोच्चि यान्ति विचलन्ति संहताः ।
यन्ति सर्वचरणं महौजसः
निष्पतन्ति मलमुद्वहन्त्यपि ॥ २६ ॥

उन्नतिं श्रयति यः स्वयं परां
तं नुवन्त्यपि महौजसः सदा ।
अर्य्यमा भ्रमति मेरुभूभृतः
तापयन्नपि जगत्प्रदक्षिणम् ॥ २७ ॥

इन्दिरारचितगौरवो भजन्
रत्नमण्डिततनूरगाधताम् ।
सोमशेखरहितो महोद्यमो
सागरस्य भुवि केन लङ्घ्यताम् ॥ २८ ॥

धिग्धिगद्य चतुरङ्गवाहिनीं
संविधेयगुरुसाहसक्रियाम् ।
यां ददर्श स कुलाङ्गनामिव
सज्जितां समिति लज्जितामिव ॥ २९ ॥

कालनुप्तसकलाङ्गसौष्ठवं
सौधमप्यवनिमेव मज्जति ।
किन्नु कण्टकहतोन्नतिश्रियः
शीर्षमुन्नमयत क्रियानताः ॥ ३० ॥

भूभृतां सदसि वल्लवाय यः
स्वां स्वसारमुपहर्त्तुमर्हति ।
पङ्क्तिपावनमतं पुरोधसं
दक्षिणां किरतु पुक्कसाय सः ॥ ३१ ॥

अद्य वज्रमपतिष्यदेव चेत्
एकमेकमवनीभुजां शिरः ।
नो नतं तदभविष्यदीदृशं
धिङ् नृपानिममनुश्च मां च धिक् ॥ ३२ ॥

भाषमाण इति भूरि निर्भरं
यज्ञघान चरणेन स क्षितिम् ।
तद्व्यथामिव वदन्त्यतिस्वनैः
सा स्थिरापि चिरमस्थिराभवत् ॥ ३३ ॥

तत्क्षणात् क्षितिभृतां समुत्थितं
सिंहनादपरिबृंहितं मुहुः ।
बिम्बितप्रचुरदीपदीप्तिम-
दुद्यतायुधझणज्झणायितम् ॥ ३४ ॥

कामिनीमुपनिनाय केशव:
दर्पकस्तु नृपतीन् समाश्रयत् ।
कोपपावकभृतो मनोभृत:
तापमाप विपुलन्तु चेदिराट् ॥ २५ ॥

कृष्णनेमिपरिदीर्णवक्षस:
शेरते स्म भुवि पञ्चषा भटा: ।
दारुणामुरुमरुन्तुदव्यथां
सम्पुपोष दमघोषनन्दन: ॥ २६ ॥

भीरुरत्नमधिगन्तुमिच्छत:
तस्य तत्र भजतोऽतिदुर्यश: ।
नागमूर्द्धमणिमुज्जिहीर्षत:
दह्यमानवपुषो दशाभवत् ॥ २७ ॥

सर्व एव कमनीयकन्यया
सङ्गत: सकललोकगीतया ।
लज्जते गुरुजनात् पुरा वसन्
चेदिपस्तु तदकीर्त्तिमालया ॥ २८ ॥

जन्मिनां प्रतिमुखं क्व सुस्तुति:
कोच्चकैरियमकीर्त्तिघोषणा ।
चिन्तयन्निति महाकुल: किल
चेदिभूपतिरभूत् क्रमोज्झित: ॥ २९ ॥

रुक्मिणीमहृत यादवः सुखम्
इत्यसौ गुरुमधीरतामगात् ।
गच्छति स्वमभिपासुकां नदीं
मारुते किमुदधिर्धुवायते ॥ ४० ॥

संज्वलन् किमपि जोषमोजसा
भीषयन्नुपगताबलाकुलम् ।
बिभ्रदुज्ज्वलमुरश्छदं दृढ़ं
प्राक् परात् स समनह्यदञ्जसा ॥ ४१ ॥

स्वान्तिकादहितयामिसंग्रह-
तापतप्तमनसाऽथ रुक्मिणा ।
दन्तवक्रवचनामलैः पुनः
प्लुष्यमाणवपुषेति सञ्जगे ॥ ४२ ॥

कर्म्म साधयितुमल्पमुद्यमो
भूरिराहुरविमृष्यकारिता ।
गोष्पदं परितरीतुमीहते
कोऽब्धियोग्यजलयानयोजनम् ॥ ४३ ॥

मातुरङ्कमधिगम्य कौमुदीं
पाणिनेव शिशुको जिघृक्षति ।
अप्रभुत्वविरतः स्वयं पुनः
लुण्ठति क्षितितलेऽपि तत्क्षणात् ॥ ४४ ॥

याद्वापसदसादनक्रिया
साधनोद्यततमेऽल्पके मयि ।
किं भवद्भिरचलाविचालनो-
त्तोलनक्षमतमैः समुत्थितम् ? ॥ ४५ ॥

अद्य मे वत यथा नराधमः
नो भवत्सु तु तथापराध्यति ।
मर्कटो हि परिमृश्य वल्लरीं
स्वं दुनोति न वनान्तरद्रुमम् ॥ ४६ ॥

स्वैरगुप्तसमयोपपातिनः
गोपरक्षनिजुषो जलौकसः ।
प्रोथयामि विभ्रिखेन विग्रहे
विग्रहं विचलतोऽद्य सोव्यता ॥ ४७ ॥

सांख्यसम्मतचितो यथा नृपाः
अत्र कर्म्मणि चिरादुदासताम् ।
एषकः प्रकुरुते प्रधानवत्
सन्निधाननिपुणीकृतः क्रियाम् ॥ ४८ ॥

कृत्तकृष्णशिरसः समुत्सर-
च्छोणितोक्षितभुवा सहाधुना ।
रागिणीं क्षितिभृतामनीकिनीं
बाढ़मेव विदधीय धामतः ॥ ४९ ॥

भीष्ममार्गणगणस्य यास्यतः
दुर्द्धरध्वननधूतचेतनम् ।
वीक्षतामिह हरिं परिश्रम-
द्दन्दशूकदशनाग्रदर्दुरम् ॥ ५० ॥

भूभृतोऽद्य समितं समेत्य भोः !
केवलं भवत साक्षिणः क्षणम् ।
नैष वल्लवकलङ्किवल्लभं
नानिहत्य नगरे निवर्त्स्यति ॥ ५१ ॥

सोऽसुभिर्हरतु मेऽद्य रुक्मिणीं
तामहं तदसुभिर्नवाददे ।
दुर्यशःक्षितिरजोभिरुज्ज्वलं
जीवनं हि मलिनं विधीयते ॥ ५२ ॥

भाषमाण इति नद्धकङ्कटः
रोषरूक्षनयनेन तत्क्षणात् ।
स्नेहमस्थिरतनूरवापयन्
अग्रहीदसिमभीमसाहसः ॥ ५३ ॥

यावदुच्चरति खे जयध्वनिः
सिंहनादवधिरीकृतश्रुतिः ।
तावदेव स समारुहत् समं
स्यन्दनं निखिलदृष्टिवृष्टिभिः ॥ ५४ ॥

सत्पथे रथमथो सुसारथेः
आश्रयैव सितपीतपीतयः ।
चक्रपाणिमनु रुक्मिणी मनः
यायि जेतुमनसोऽत्यतत्वरन् ॥ ५५ ॥

पार्थिवस्य पृतनानुपातिनी
घोरनादमुखरा निरन्तरा ।
तां पुरःसरभगीरथामर-
निम्नगाश्रियमशिश्रियत्ततः ॥ ५६ ॥

दन्तवक्रशिशुपालपूर्वकाः
स्वस्वसैनिकनिकारसंश्रिताः ।
भङ्गमेकमनुभङ्गवीथयः
वारिधेरिव समन्वगुर्नृपम् ॥ ५७ ॥

क्व प्रमोदलहरी विवाहजा
क्वाधुना परमदारुणो रणः ।
आकुलाकुलकुलाङ्गनाकुलं
मन्दमन्दमगमल्लुगल्लं क्रमात् ॥ ५८ ॥

आचकाङ्क च जयं परं प्रिये
रुक्मिणीञ्च हरिहस्तगामिनीम् ।
दुर्घटं तदुभयन्तु चिन्तयन्
अन्वतम भ्रममङ्गनाजनः ॥ ५९ ॥

भूरिवर्णशबला बलाबली
गर्जनोर्जितपरम्परा श्रिता ।
विद्युतेव विविधास्त्रलेखया
मेघराजिरिव गामपिप्लवत् ॥ ६० ॥

उत्साहयन्तोऽतिमनांसि पुंसां
प्रणर्त्तयन्तो द्विपसप्तिसैन्यम् ।
तरङ्गभव्दानुदधेर्हसन्तः
उच्चैरुरच्चैर्घनवाद्यनादाः ॥ ६१ ॥

वीक्ष्य स्वसारमतिसाध्वसबाहुवल्ली-
संवेष्टिताच्युतगलां पुरतः शताङ्गे ।
सौदामिनीमिव घनाङ्गगतां सुमेरौ
रुक्मी तुतोष च रुरोष च योग्यताप्तः ॥ ६२ ॥

हरिरगणितसैन्यं धावदाक्राम्य भूमिं
हरिणगणसमानं विप्रकृष्टाद्विलोक्य ।
चकितचकितचित्तां सम्यगाश्वास्य कान्तां
झटिति चलमकार्षीत् सम्मुखे तं शताङ्गम् ॥ ६३ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
प्रयाणं नाम चतुर्द्दशः सर्गः ॥ ० ॥

—•⁂•—

## पञ्चदशः सर्गः ।

बलोऽथ सबलो बालमनेकाक्रान्तमेककम् ।
उपलभ्य समालभ्य हलिं हालामदोऽभ्यगात् ॥ १ ॥
अग्रे तमग्रजं वीक्ष्य शुभ्रांशुमिव शुभ्रगुम् ।
आननश्रीः श्रियः पत्युः तमीव दिद्युतेतमाम् ॥ २ ॥

पद्मबन्धः ।



(एष बन्धाक्षरादारभ्य दिग्दलेषु निर्गमप्रवेशाभ्यां विदिग्दलेषु तु क्वचित् प्रवेशेन क्वचित् निर्गमेन च अधस्तात् विन्यस्तः श्लोको भवति।)

तान्तताभागतामीग्र-ग्रमीता मदमापता ।
तापमाप नता सेना नाशेताहिततान्तता ॥ ३ ॥

विभक्ताऽपरभाविन्या शून्यं तद्रुक्मिणो बलम्।
असंख्यमेकरूपञ्च मेन आत्मानमव्ययम्॥ ४॥
गजेन्द्रगमनाऽधोरा सुगुप्ता सा महोन्मदा।
वाहिनी तमसाच्छन्ना दधाव परनायकम्॥ ५॥
पदातिपोतिसम्पन्नाः सहसा रथिकुञ्जराः।
अधावन्त हरिं मत्ताः सहसारथिकुञ्जराः॥ ६॥
रामः सेनामुखे तिष्ठन् सेनां नानाविधायुधाम्।
यथास्थानं समावेश्य समानगुणगौरवाम्॥ ७॥
वार्त्तवार्त्तां स्वयं लिप्सुरालोकलोललोचनः।
चातकः शातकोऽरीणां सजलं जलदं यथा॥ ८॥
कादम्बरीप्रियः प्रायात् कादम्बहरिणो हरिम्।
कादम्बरेणुरोमाञ्चः कादम्बकधनुर्द्धरम्॥ ९॥

गोमूत्रिकाबन्धः।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दी | प्र | नो | ला | व | ली | श्या | मं | धा | म | स | न्तु | ष्ट | लो | क | कम् |
| प | प्र | च्छ | ला | ङ्ग | ली | चे | मं | भू | म | द | न्तु | र | लो | क | कम् |

(प्रथमायाः पङ्क्तेः प्रथमाक्षरस्य, द्वितीयायाः पङ्क्तेः द्वितीयाक्षरस्य, प्रथमायास्तृतीयस्य, द्वितीयायाश्चतुर्थस्य इत्येवंक्रमेण पाठे प्रथमार्द्धम्, पुनः द्वितीयायाः पङ्क्तेः प्रथमाक्षरस्य, प्रथमायाः द्वितीयस्य, द्वितीयायास्तृतीयस्य प्रथमायाश्च चतुर्थस्य अक्षरस्य एवंक्रमेण पाठे द्वितीयार्द्धं सम्पद्यते। तेन चायं श्लोकः।)

दी प्र नो ला व ली श्या मं धा म स न्तु ष्ट लो क कम्।
प प्र च्छ ला ङ्ग ली चे मं भू म द न्तु र लो क कम्॥ १०॥

बलरामात् सरामः स क्रियानन्मनोनमत् ।
मनस्वी विघ्नखिन्नोऽपि विनयं न जहाति हि ॥ ११ ॥

ऊचे शौरिररीन् हन्तुः सर्वं मङ्गलमङ्ग! मे ।
पश्यतोऽर्थ्यमणश्चार्य्यं कस्य नश्यति नाशुभम् ॥ १२ ॥

सह तेन समुद्युक्तः समिति समयादरम् ।
सहते न समुद्युक्तः समिते समयादरम् ॥ १३ ॥

समुद्गयमकम् ।

प्रागन्नाय नृपो गृह्णन् सज्यं कोदण्डमण्डलम् ।
रुक्मिणीजानये वाणं पञ्चवाण इवाकिरत् ॥ १४ ॥

त्रासयन्नहितानीकं पूरयन् विदिशो दिशः ।
दारयन् रन्ध्रमद्रीणां सिंहनादं ननाद च ॥ १५ ॥

चिरं चारुरुचा रोची विभवो विबभौ विभुः ।
कोपपाकाकुपः कोऽपि चलाचलोऽचलाचलः ॥ १६ ॥

द्व्यक्षरपादः ।

विविद्वान् युद्धविद्वान् स प्रजिहीर्षुं हरिं हली ।
दन्तभङ्गं प्रबुद्धक्रोध कः क्षमः क्षमते खलम् ॥ १७ ॥

विशेषविषयः सोऽथ कालिन्दीभेदनोऽभिनत् ।
खगैः खगेशवेगैस्तम् उत्सर्गमिव बाधकः ॥ १८ ॥

श्लोकद्वयेन लताबन्धः



( अत्र निम्नपुष्पस्य वामदलगत'वा'शब्दादारभ्य क्रमिकवक्राक्षरसहितपाठेन अधस्ताद्विन्यस्तं श्लोकद्वयं सम्पद्यते। चमत्कारिताविशेषस्तु अधोदेशात् वक्राक्षराणां ऊर्द्धदिशि क्रमिकपाठे **"हरिदासकृतिरियं"** इति वाक्यमुपजायते। )

वाहवाहसहव्यूहः भूरिवैरिप्ररिष्टिकृत्।
सदामदा पदातिश्च व्यसरत् सह सङ्गिभिः ॥ १८ ॥
प्रकृष्टकृतिकृद्वीरः भूतिभातिस्तुतिश्रितः।
हरिङ्करिपरिव्राजो चायं चायं स्वयं ययौ ॥ २० ॥
लोकः समालुलोके प्राक् स्थिरायामस्थिरं शिरः।
रुक्मिसैन्यस्य जन्येऽस्मिन् हरिमुक्तं शरं परम् ॥ २१ ॥
अन्योन्यशस्त्रसम्पात-विदीर्णवर्म्मवर्म्मणाम् ।
रोषेण सह शूराणां दारुणो रण ऐधत ॥ २२ ॥
परारिपारप्रापूरैः पुरारिपुररूपपैः।
पुरः पुरः परं पारं प्रपुपूरे परैः परैः ॥ २३ ॥ द्व्यक्षरः।
शार्ङ्गिणा शाङ्गिणा मुक्ता शरराजिरराजत।
अचला चञ्चला चेत् स्यात् सौपम्यं सम्यगीयुषी ॥ २४ ॥
शतशः सन्निधौ कृष्णं किरन्तं विविधायुधम्।
संपश्यन्तद्दलं नश्यत् परःशतममंस्त तम् ॥ २५ ॥

सर्वतो भद्रः।

ना लो सा रा रा सा लो ना
लो ल या म म या ल लो।
सा या ता ता ता ता या सा
रा म ता जि जि ता म रा ॥ २६ ॥

उपासन्नो द्विधा चक्रे चक्रेण चक्रपाणिना।
विप्रकृष्टः समाकृष्टः पाशेन पशुवत् परः॥ २७॥

सहस्रकिरणाकारं सहस्रशरकारिणम्।
दुर्दृशं तं ददर्शाग्रे हरिं हरिणवज्जनः॥ २८॥

दीनरावनतो वारे रामाला वहदाहवा।
वाहदाहवलामारा रेवातीववरा नदी॥ २९॥

श्लोकप्रतिलोमयमकम् अथवा गतप्रत्यागतम्।

विदर्भभूपतिः पश्यन् नश्यन्तीं स्वामनीकिनीम्।
मधुद्विषं विदिद्वेष महाद्विपमिव द्विपः॥ ३०॥

सपक्षा रिपुपक्षाशा मशिखा विशिखावली।
मुक्ता तेन हरेः कण्ठेऽकुण्ठमापतदुन्नता॥ ३१॥

व न मा लि का य पा तो
न वा नि खि ल जो व पा।
मा नि ता ता ला हा जो य
लि खि ता ङ्क क ला ल का॥ ३२॥

अर्द्धभ्रमकः। युग्मकम्।

मुखेन सह रुक्मिण्या म्लानमूर्त्तिः शरैः।
तस्याश्च सह हासेन केशवोऽवीवृधन्महः॥ ३३॥

आसन्नं दूरसञ्चारं सुदुर्दृशं सुदर्शनम्।
आलोकलुप्तप्रत्यर्थि-प्रकाशं स समग्रहीत्॥ ३४॥

भीतीनां तरसाधारं तरसा धारयन् हरिः।
द्विषतस्तु सहसाक्षिप्यं सहसाक्षिप्य तद्दृशः॥ ३५॥

पादाद्यन्तयमकम्।

कृत्यमानां परग्रीवां तेन पश्यन् परः पुरः ।
द्राक् पलायितुमारब्धः स्वं गलं छिन्नमन्वभूत् ॥ ३६ ॥
एकस्यापि हरेरग्रे शतशो रुक्मिसैनिकाः ।
नातिष्ठन्त क्षीयमाणा अवश्याया रवेरिव ॥ ३७ ॥

वृक्षबन्धः ।



( उपरितनशाखयोर्वामशाखास्थचतुर्द्दलपुष्पस्य उपरिदलस्थ'प्र'रूपादक्षरादारभ्य बह्वाक्षरेण सह प्रथमं पाठः। परञ्च अपरदलस्थयोरपि अक्षरयोस्तथैव पाठः। तत्परञ्च पत्रशीर्षस्थाक्षरयोः तथैव पाठः। तेन च प्रथमचरणं सम्पद्यते। एवं-रूपेण उपरितनशाखयोर्दक्षिणशाखायां द्वितीयचरणम् अधस्तनयोः शाखयोर्वाम-शाखायां तृतीयचरणम्, दक्षिणशाखायाञ्च चतुर्थचरणं पठनीयम्। तेन चाधस्तनः श्लोकः सम्पद्यते। )

प्रकामकार्य्यकाम्यैक-भूपतिः पतिपर्व्वकः।
नाश्यपक्ष आश्वरविः तेजः स्वोजः सुजः पविः॥ ३८॥

सन्दधे शत्रुशस्त्राणि चकर्त्त च मुमोच च।
जघान च द्विषत्सेनां युगपत् स विदर्भराट्॥ ३९॥
युग्मकम्।

रोषताम्रास्यसूर्य्यस्य सकाशेऽप्यस्य संयुगे।
नयनेन्दीवरद्वन्द्वं पुस्फोट तात्कालिकम्॥ ४०॥

विकलं विकलं कृत्वा सकलं सकलं द्विषम्।
समरे समरेऽदीपि समदः समदर्शनः॥ ४१॥

रुक्मिणः स महान् मानः बभूव स्वविपत्तये।
उपरागाय शीतांशोः पूर्णिमायां हि पूर्णता॥ ४२॥

खर्व्वीकरिष्यन् गर्वं तं विक्रमं स त्रिविक्रमः।
ततान ताड़ितो यद्वत् पाशुगेनाशुशुक्षणिः॥ ४३॥

## मुरजबन्धः ।




(प्रथम'स'कारादारभ्य तिर्य्यग्रेखानुसारेण पाठे प्रथमचरणम्, तथैव चतुर्थचरणम् । द्वितीयचरणस्यप्रथमाक्षरादारभ्य तिर्य्यग्रेखानुसारेण प्रथमचरणगतयोर्द्वितीयतृतीययो-र्द्वितीयचरणगतयोश्चतुर्थपञ्चमयोः प्रथमचरणगतयोः षष्ठसप्तमयोरक्षरयोर्द्वितीयचरणस्यास्य अन्तिमस्याक्षरस्य च पाठे पुनर्द्वितीयचरणं निष्पद्यते । तृतीयचतुर्थचरणयोस्तथैव पाठे पुनस्तृतीयचरणं निष्पद्यते, तेन च निम्नलिखितश्लोकः सञ्जायते ।)

स ह सो च्च त मा न श्रीः
सा ह सो र्जि त मा न सः ।
स ह सो द्व र्द्ध मा न श्रीः
स ह सो च्च त मा न नः ॥ ४४ ॥

प्रयोगैर्विविधैर्बन्धान् महाजन्यक्षदादधत् ।
महाकाव्यकरः कृष्णः महाकविरिवाद्युतत् ॥ ४५ ॥

विक्रान्तवन्तमत्यन्तं क्रान्तमूर्त्तिर्विदर्भराट् ।
न सेहे यादवाधीशं मृगेशमिव कुञ्जरः ॥ ४६ ॥

सत्वा तेन नते त्वाम कातरेऽप परे तका ।
बाला नूतनतूलावा चारुहाससहा रुचा ॥ ४७ ॥

प्रतिलोमानुलोमपादः ।

विद्वेषादिव रुक्मिण्याः श्रितं शौरिं जयश्रिया ।
जिगीषामास निर्वर्ण्य बलभद्रो द्विषद्दलम् ॥ ४८ ॥

विदधे विशिखासार-च्छलेनार्कान्तिकेऽपि सः ।
अश्रान्तलेखानाकाश-प्राङ्गणे ज्योतिरिङ्गनान् ॥ ४९ ॥

## छिद्रबन्धः ।

( एकस्य पत्रस्योपरि अपरं पत्रं निधाय तस्मिन्नुपरितने पत्रे श्रेणीद्वयेन कियत्कियदन्तरम् अष्टौ अष्टौ कृत्वा षोडशच्छिद्राणि विधेयानि । तेषां छिद्राणां मध्ये आदिमं तृतीयं पञ्चमादिकञ्चाक्षरं लेखनीयम् । येन तानि अधःपत्रे स्थितानि स्युः । द्वितीयं चतुर्थादिकञ्चाक्षरं छिद्रान्तरालेषु लेखनीयम् । येन तानि उपरितने पत्रे स्थितानि स्युः । ईदृशविन्यासं च अधस्तात् विन्यस्य श्लोकः सज्जायते । चमत्कारितातिशयस्तु उपरितनपत्रापसारणे अधस्तनपत्रगतानाम् अक्षराणां पाठे बङ्गभाषायाम् इदं वाक्यमुपजायते । यथा—"तेर शत षोल मन ए रचना समापन ।" )

ते श र प्रा श जा त ङ्गा षो ढा ल क्ष स दो न तान् ।
ए तान् र णे च ला ना धुः स ञ्जा मा न प तीन् न कान् ॥ ५० ॥

सभावान्विक्रमी दन्त-वक्रस्तु क्रोध विह्वलः ।
पूर्ववाग्व्यक्तमर्थं हि नानुतिष्ठन् श्रियः पदम् ॥ ५१ ॥

असम्भ्रान्तवपुष्कः क्षिप्रं चञ्चलाङ्गद्युतिश्रितः ।
गम्भीरगर्जनः शत्रून् जलदश्च जिगाय सः ॥ ५२ ॥

चन्द्रहासेन तेनाथ ते नाथकृतपालनाः ।
पाल-नाशन-निष्प्राणाः निष्प्राणाः पेतुराहताः ॥ ५३ ॥

हली समाहतस्तेन तेने तेजस्वितां पृथुम् ।
नोल्लोलयति कल्लोलान् वाततुन्नः किमर्णवः ॥ ५४ ॥

सीधुसेवनरक्ताभं विशालं लोललोचनम् ।
प्रभात इव शोणाब्जं रोषात् सुरक्ततां ययौ ॥ ५५ ॥

दन्तवक्रं क्रमात् क्रामन् हलभृत् स हलाग्रतः ।
मुषलेन ममर्द्दालं प्रहारोद्धतमुद्धतम् ॥ ५६ ॥

अतालव्यः ।

प्रहृतः कोऽपि निःसंज्ञः संवुवूर्षुं सुराङ्गनाम् ।
विलोक्यैव लब्धसंज्ञः रणे प्रववृते पुनः ॥ ५७ ॥

निहतात्मजसोदर्य्यो धैर्य्यमाधाय धीरधीः ।
शस्त्रपाणिः सीरपाणिं ययौ यममिवापरः ॥ ५८ ॥

कुण्डली हलिनो भीतः खगेशादिव कुण्डली ।
वेशवान् आहतः कश्चित् बभूव रन्ध्रवेशवान् ॥ ५९ ॥

शस्त्राशस्त्रि महोत्साहैः हस्ताहस्ति नखानखि।
वव्रधे तुमुलं जन्यं सेनयोरुभयोरलम्॥ ६०॥

हत्वासन्नान् स शस्त्रेण शत्रूनस्त्रेण दूरगान्।
समीपविप्रकृष्टानाम् अभवत्तुल्यदारुणः॥ ६१॥

समस्ता रिपुसेनास्ता रामास्त्राशुगसंभृतः।
दूर्वा इव बभुः प्रातः शिरःशिशिरशीकराः॥ ६२॥

दयावान् स बलो भग्नान् दलनायाततानवान्।
सम्बवर्ज लोलहृदः भटान् लग्नान् व्यनीनशत्॥ ६३॥

गूढ़प्रथमपादः।

पलायामासिरे सेना मूर्च्छां नीते कराहते।
भास्वता दन्तवक्रेऽस्मिन् सोमे तारा इव प्रगे॥ ६४॥

अङ्गनालिङ्गिताङ्गं तं गोविन्दमिन्दुसुन्दरम्।
तदा बलोऽवलोक्येव शिश्राय विजयश्रियम्॥ ६५॥

रोचनस्तेजसा शौरिः मध्यन्दिनविरोचनः।
रोचनश्रीस्तताड़ारीन् नेत्रनिन्दितरोचनः॥ ६६॥

रुक्मी प्राणपणोद्योग-महोत्साहसहोऽपि सन्।
नात्येतुमच्युतं सेहे प्रतिकूलं यथा विधिम्॥ ६७॥

सूतं जघान चिच्छेद ध्वजं सह जयाशया।
बिभेद च शरैः शौरिः युगपद्वर्म रुक्मिणः॥ ६८॥

विलोक्योत्तूर्णि योद्धृणां दुर्नीतिं नेतुरौद्धयोम् ।
चेतो विषेदे निःश्रेणि-स्थितीनां दुस्मृतिश्रिति ॥ ६८ ॥

निरौष्ठ्यः ।

जेतुं जवमिवेषूणां मुहुरापततां हरेः ।
परि पुरःसरीभूय दुद्रुवुर्द्रुतमाहवात् ॥ ७० ॥

विनेशुः सैन्यसेनान्यः सहायस्तु पराजयः ।
स्मरन्निति स निर्विस्मः मासिरासीद्गतो रथात् ॥ ७१ ॥

विद्धास्त्रं स वपुः पातिश्रिलीमुखकदम्बकम् ।
वक्षन्निवागात् कृष्णं स-शिलीमुखकदम्बकम् ॥ ७२ ॥

चिच्छेदागच्छतस्तस्य निशातशरसञ्चयैः ।
मुष्टौ रिष्टिमरिष्टारिः रुक्मिणो रुक्मपुङ्खकैः ॥ ७३ ॥

गदाधरं दधावाथ गदामादाय दारुणाम् ।
शतबाधावधूतोऽपि कार्य्याद्भ्राम्यति नोद्यमी ॥ ७४ ॥

लोललोलाललो लीला-लालो लोलालिलोलल: ।
लीलेलालो लाललाल: लोललोलोऽललालल: ॥ ७५ ॥

एकाक्षरपादः ।

माधवस्तां निकृत्यारात् चक्रेणाक्रम्य तं गले ।
सव्यस्य धनुषोऽग्रेण चक्रेऽत्तं निस्त्रिंशमादरे ॥ ७६ ॥

युग्मकम्

पाणावुन्नमिते तस्मिन् चन्द्रबिम्बानुबिम्बितः ।
चन्द्रहासो जहासास्य रथे चन्द्र इवापरः ॥ ७७ ॥

सुवर्णभूषिता माऽलं नाथस्य करमाददे ।
सुवर्णभूषिता सालं लतेव नृपजाकुला ॥ ७८ ॥

रामोऽथ दूरतो वीक्ष्य तत्क्षणादेत्य तत्पुरः ।
समयोचितमत्युग्रम् अवोचदच्युतं वचः ॥ ७९ ॥

मानिनो माननाशः स्यान्मृत्यरप्राणनाशकः ।
तुल्या दशैव तिग्मांशोरस्ते चाब्दतिरस्कृते ॥ ८० ॥

उष्माभावः परं जाड्यं प्राणमोक्षो महोशयः ।
पारवश्यं परैश्छिद्यं क्षीणौजःशवर्गोर्भुवि ॥ ८१ ॥

महान् खल्वपकर्त्तॄणां दयते तु ह्निरस्ति न ।
ग्रसते न दधात्येव स्वां खनन्तमपि क्षितिः ॥ ८२ ॥

उपकारः प्रतीकारः महीयानपकारिषु ।
प्रभूतेन्धनदानेन ज्वलनो हि प्रशाम्यति ॥ ८३ ॥

विरसं तज्जङ्घोहोमं विरसं पन्नगं यथा ।
सदनं यातवानेष सदनं प्रति गम्यताम् ॥ ८४ ॥

अथवैनं क्षुरप्रेण मुण्डयित्वा विहापय ।
अयमेव वधः प्रोक्तः वध्यस्यालोककर्म्मणः ॥ ८५ ॥

अभिषिक्तो वियोक्ताव्य: नासुभिर्वसुधेप्सिता ।
विशेषतस्तु सम्वन्धी स्वसासन्ना च सादिनी ॥ ८६ ॥

इति ज्यायस आदेशात् विमुखोऽभूत् स तद्वधात् ।
नहि लङ्घयते धीमान् पूज्यं पूजितसद्गुण: ॥ ८७ ॥

अमूर्द्धन्य: ।

केशपाशं हृषीकेश: लुलुञ्चे तस्य कुञ्चितम् ।
मानहानिर्बभौ भूमौ पुञ्जीकृतमिवायश: ॥ ८८ ॥

जीवन्मुक्त: परोद्योगात् अदृष्टादिहवानयम् ।
पुनर्नारायणे योक्तुं न पुन: प्राविशत् पुरम् ॥ ८९ ॥

प्रायोपवेशनं चक्रे उग्रात्मा पुरतोऽन्तरे ।
नालोचयदवस्थां ताम् उग्रात्मा पुरतोऽन्तरे ॥ ९० ॥

स्वपुरं प्रति दारुके रथं
मरवं प्रेषयति प्रहृष्यति ।
स सितस्मितराजजाऽधरे
नलिने वा नलिनं दधेऽधरम् ॥ ९१ ॥

सम्मदो विजयिनीमनीकिनीं
द्वारकापथमथापि सा समम् ।
सोऽपि तत्र निखिलान् खलान् खलु
व्यानशे व्रजपतो व्रजत्यरम् ॥ ९२ ॥

## विशेषपद्मबन्धः ।




( दलवहिःस्थित 'वि'शब्दादिकमारभ्य दक्षिणक्रमेण सरलभावेन वक्षाचर-सहितं 'र्व्व'शब्दादिपर्य्यन्तम् एकैकचरणं पठनीयम्। तेन चाधस्तनः श्लोकः सञ्जायते। चमत्कारितावशेषस्तु दलवहिःस्थितानां 'वि'शब्दादीनां क्रमिकपाठे ईदृशं कविदेशपरिचायकं वाक्यमुपजायते। यथा—"विप्रकविर्व्वङ्गवासी"। )

**विशेषणीयः परिपूर्णगर्व्वं प्रधानशक्तोः परमो जयोऽङ्ग।**
**कसत्तथालाप-हरिप्रभा वाऽविशत् पुरं सा परपक्षहासी ॥ ८३ ॥**

**इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये**
**कृष्णविजयो नाम पञ्चदशः सर्गः ॥ ० ॥**

# षोड़शः सर्गः।

——*⁑*——

धाम निजं समेत्य रमेशे
प्राभवति स्वनितादपि नृणाम्।
नूतनहारिहरीक्षणजन्मा
तुङ्गतमः प्रमदः प्रबभूव॥ १॥

सिक्तसुमृष्टमहापथसार्थैः
केतुगणैर्धृतचित्रपताकैः।
अत्यलसच्च चलत्सुममाल्यैः
भीष्मकजामिव वीक्ष्य पुरश्रीः॥ २॥

वस्तु समर्जयदेकसमीके
लोकललामतमं द्वितयं सः।
तत्र चलाप्यचला कमलाभूत्
कीर्त्तिरितीव निरीक्ष्य चलासीत्॥ ३॥

भीष्मकजां मुरवैरिविहारात्
कान्तिमतीमवलोक्य नितान्तम्।
द्वारवती सुपुरी पुरुरूपैः
मत्सरिणी चकितेव चकाशे॥ ४॥

स्फोच्छलिका किमु पुञ्जितकान्तिः ?
चन्द्रविभा किमु मूर्त्तिमती वा ।
देहमिता नु सुधा वसुधायां
तामिति वीक्ष्य जनैः समतर्कि ॥ ५ ॥

नीलमणिर्विमलो वनमाली
स्वर्णमयीयमपि प्रियदृष्टिः ।
दैवकृतो मणिकाञ्चनयोगः
एषक इत्थमलापि च लोकैः ॥ ६ ॥

श्रेणिकृता प्रमदा प्रमदाली
नव्यवधूं व्यवधूय नरौघम् ।
स्वैरमुलुध्वनिनाऽध्वनि नाम
क्षेमयितुं सहसा सहसायात् ॥ ७ ॥

सान्द्रमुदां नगरी लहरीभिः
भूरिरवा समहा महतीभिः ।
तुङ्गतरङ्गततिं सरिदोघम्
अन्वकरोदिव सा न्वतिसाध्वी ॥ ८ ॥

राक्षस एव भवेन्नु विवाहः
दानविधिं न विधिर्विदधीत ।
चिन्तयतीत्थमितो वसुदेवे
दैववशाद्दृशे ध्वजमारात् ॥ ९ ॥

आनकदुन्दुभिमानसमेषः
यानपथेन समं परिणत्तंः ।
सन्ततचक्रविवर्त्तविघातैः
आगतवानथ भीष्मकराजः ।। १० ।।

हासविकासितशान्तिसुखस्य
शस्त्रनिवृत्तिसुवृत्तिशुभस्य ।
हेतुमिहागमनेऽस्य मनुष्यः
युद्धमबुद्ध न बुद्धिविवृद्धः ।।११ ।।

सन्निहितेऽतिहिते वसुदेवः
सत्वरमेत्य तुरङ्गमवल्गाम् ।
आददतादरपूर्णविकासं
धीरमतेर्विनयी नयसिद्धः ।। १२ ।।

स्यन्दनतोऽवनतिर्भवतोऽस्याः
उन्नतिमेव पुरो विदधीत ।
अञ्जलिमानिति मञ्जुललापी
तस्य धरावतरञ्च ययाचे ।। १३ ।।

भीष्मकभूमिपताववतीर्य्य
पीठमुपाश्रयति श्रितसौख्ये ।
सुष्ठु वचश्चतुरोऽनुनिनीषुः
सौमरवदोऽवददच्युततातः ।। १४ ।।

धीर! धराधिपते! चपलत्वम्
अस्य शिशोः परिमृष्य विमृष्य।
वेदनिकाममविदन् विषजन्यां
सम्बिभृयात् फणिनोऽपि मणिं यः॥ १५॥

सम्मतसद्वरदित्सितवत्सां
बालतमोऽपहरन् हरिरेषः।
रोषयति स्म वरं युवराजं
क्षेपयति स्म च माञ्च भवन्तम्॥ १६॥

ब्रूहि विधेयमहो तदिदानीम्
आश्रव एष जनस्तव वृत्तः।
यो विमुखो हि सतः किल कृत्यात्
शश्वदसौ भविताऽलमवद्यः॥ १७॥

इत्थममृष्य वचो विनिकृष्य
भूपतिरेतदवोचत हृष्यन्।
भावविबोधितवेशविशेषः
नैव जनः सदसद्विविनक्ति॥ १८॥

इत्थमनल्पवचांस्यलमुक्त्वा
सूनुहरः स्म हरिर्दयते मे।
शैवलिनीं प्रमृशन् द्विजराजः
स्यात् सरसोऽपि मुखोज्ज्वलकारी॥ १९॥

ईदृशमात्ममना बहुयोगं
संविदधल्लभते वरपात्रम् ।
मत्तनयामनयत् स्वयमेषः
वक्तु विभो ! किमितो मम भाग्यम् ॥ २० ॥

सत्कुलशीलवराय वराय
नोन्नतिमान् प्रददत्तनयां कः ।
धूर्जटये तनुजां प्रतिपाद्य
नूनमभूद्गिरिराडतितुङ्गः ॥ २१ ॥

विष्णुपदादभवत् पतिता सा
विष्णुपदी भुवनानि पुनाना ।
हृ पवितु स्वकुले पुनरेषा
विष्णुपदं समगाददितिदीना ॥ २२ ॥

आचिनुते तनयां स्वयमेव
काम्यवरो यदि को नु निषिध्येत् ।
गम्यतरु व्रततीं निपतन्तीं
को हि मृदु विभजत्यतिशाल्यः ॥ २३ ॥

जीवजनस्य हणीयमिवेह
ब्रह्म वरं तनुजेव च विद्या ।
लम्भयते यदि शक्तिवशेन
प्रीतिमयानि जगन्ति तदा स्युः ॥ २४ ॥

तद्भवतामनुमत्यनुवर्त्ती
दातुमिमां विधवेऽहमुपेतः ।
दानमृते परकीयपदार्थे
स्वत्वमुदेति नहि ग्रहमात्रात् ॥ २५ ॥

स्नेहयुतां बहुसंस्कृतिशुद्धाम्
आहुतिमद्य परामिव कन्याम् ।
श्रीहरये शुचये शुचये वा
सम्भवितास्मि दृढच्चरितार्थः ॥ २६ ॥

जानति तामनुजानति तस्मिन्
उत्सवमेनमपि प्रतिभृत्यान् ।
संवद्र्धे स च तस्य निदेशात्
सिन्धुतरङ्ग इवानिलनुन्नः ॥ २७ ॥

दुर्द्दमदारुणवैरिपिताऽयम्
आपतितः सहसा कथमेकः ।
द्वारवतीजनसंशय एष
साकमरं रविणाऽगमदस्तम् ॥ २८ ॥

तोरणमूर्द्धनि तुल्यनिवेशा
दीपततिर्विशदा विकसन्ती ।
दोषमुदस्य प्रदोषमशेषं
लोकदृशि प्रगुणं प्रणिनाय ॥ २९ ॥

वातचला प्रतिहारपताका
दीपशिखां लुनती किल काश्चित् ।
संज्वलिता परयेति निरीक्ष्य
द्राङ्निरवाप्यत केनचनेत्थ ॥ ३० ॥

उच्चशिरःसु कलङ्कितचन्द्रः
न्यस्यति पादमितीव समन्युः ।
सौधगणोऽपि स सर्वशुचिस्तम्
अस्पृशदुज्ज्वलदीपकपादैः ॥ ३१ ॥

नूत्नमहार्घ्युतिरत्नजभूरि-
भूषणभूषितमञ्जुलवामा ।
श्रेणिकृताऽट्टशिखासु दिदृक्षुः
व्योम्नि धनुर्व्यतनोदिव जिष्णोः ॥ ३२ ॥

मङ्गलगीत्युलुलुस्वनवाद्य-
वेणुरवा लयतालसमेताः ।
ऐक्यगता इव सुश्रवणीयाः
लिल्युरुदन्वति खे विचरन्तः ॥ ३३ ॥

दान-सभाजन-देवन-मानाः
स्पर्शन-दर्शन-भाषण-हर्षैः ।
हास-विकास-विलास-विहाराः
तन्नगरीगरिमाणमतन्वन् ॥ ३४ ॥

मञ्जुलसज्जितनागरनारी
मन्दिरचत्वरमभ्यतिफुल्ला ।
कृष्णपुरःसरभीष्मककन्यां
तां वसुदेवगिरोपनिनाय ॥ ३५ ॥

पर्व्वणि चन्द्रमसः सुषमेव
पङ्कजिनीव शरद्यपनिद्रा ।
सम्मथने जलधेश्च सुधेव
लोकदृशः रमतोषयदेषा ॥ ३६ ॥

सम्मदपूरविपूरितचेताः
क्षौविनतो वहिरच्युत आसीत् ।
एष निसर्गनयश्चतुरस्य
सन्निहितस्य हि दारगुरूणाम् ॥ ३७ ॥

प्रीतिविकासि मनस्त्वरते च
वारयते च पुनर्गुरुलज्जा ।
आलिरलं प्रयियासयते च
विक्लवतामिति सापि जगाम ॥ ३८ ॥

भीष्मकजाऽच्युतयोर्युगलेऽस्मिन्
पीठमुपाश्रयति श्रितपाणौ ।
प्रान्ततडिन्नवनीरदकान्तौ
नाभवदेव तुला भुवनेऽस्मिन् ॥ ३९ ॥

खेदचिताप्तरुणीजनहस्तात्
सुस्मितशुक्लतमौक्तिकलाजाः ।
विष्वगिवान्तिकमौघ्रमिरस्तः
पुष्पकरस्य यशांसि पतन्तः ॥ ४० ॥

द्वावपि लोकयितुं मनुजानाम्
आपततां विफलाऽभवदाशा ।
एकतरं खलु दृङ्निपतन्ती
येन ततोऽतितृषा न निवृत्ता ॥ ४१ ॥

साक्षिणि ईश्वितुरस्य जगत्याः
साक्ष्यविधानपरोऽथ पुरोधाः ।
रागसुखेन तयोः सह साग्निः
अग्निस्पृचा समजिज्वलदुच्चैः ॥ ४२ ॥

उच्यमितामुखचन्द्रिकयाऽथ ते
विलिलोकिषवोऽखिललोकाः ।
सम्मुखराजितिरस्कृतगात्राः
संदृशुस्तु वहिष्कृतवक्त्राः ॥ ४३ ॥

स स्तिमितोऽस्थिरताप्रतिपाद्य-
क्षोभपदेऽपि बभूव समाजः ।
कस्यचिदुच्चजवे करणस्य
सन्निभृतान्यपराणि भवन्ति ॥ ४४ ॥

तत्र परस्परवक्त्रमवेक्ष्य
तौ सुतरामवशेन्द्रियसार्थौ ।
बद्धपरस्परलोचनपद्मौ
प्रीतिरियं कियतीति न बुद्धौ ॥ ४५ ॥

बाढ़मुभावितरेतरकान्ति-
राशिविलग्नविलोचनयुग्मम् ।
स्पन्दनहीनतनू प्रतिपत्तुं
शेकतुरुन्मनसौ न मुहूर्त्तम् ॥ ४६ ॥

रूपसुधोदधिदूरनिमग्न-
नेत्रयुगौ स्वगतभ्रमसारौ ।
हर्षभृते जगतां नहि किञ्चित्
न स्म विलोकयतो न च विक्तः ॥ ४७ ॥

आसीनां कनकासनेषु सुमुखीं प्रत्यङ्मुखीं प्रीतिमान्
राजा हारमनोहराय हरये प्रागाननायार्चयन् ।
उत्कण्ठाकुललोकलोचनकुलैरालोक्यमानामदात्
पुण्यं विश्वगुरोर्गुरुत्वममलं प्रत्यग्रमप्यग्रहीत् ॥ ४८ ॥

लोकानां विकलीकृतश्रुतिकुलैरानन्दकोलाहलैः
नानानादसमेधितैः सुमधुरं गानं वधूनां जितम् ।
तूष्णीम्भूतनिजाननैर्जनगणैरुत्कर्णमाकर्णितं
संधावज्जनतान्तरादपि तयोर्दृष्टं चिरेष्टं मुखम् ॥ ४९ ॥

चित्रालापाश्चतुरतरुणाः कृष्णमुत्प्रासमुग्धं
हेलालोला नवयुवतयो रुक्मिणीं क्षीविनम्राम् ।
भूयःस्नानोच्चितकलकलाक्रान्तकर्णं विकर्णौ
पुष्पासारैः प्रतितनु गृहं निन्यिरेऽन्योन्यलग्नाः ॥ ५० ॥

लक्ष्मीं लक्ष्मीधिताशौ सुकृतमतिकृती भीष्मकः पौरलोकः
आशातीतामशेषां मुदमुदवसितं सर्वमेकान्तकान्तिम् ।
दृष्टार्थं प्रार्थिसार्थो मुदितयदुपतेरन्नमन्नाभिलाषी
शान्तिं लेभे तदानीं जगदपि लभतामेवमेवाधुनापि ॥ ५१ ॥

घोरीकुलोद्भवमहम्मदनामधेयः
दिल्लीं विजित्य जितवानपि कान्यकुब्जम् ।
एकां कलामिव विधोरपरां गृहीता
स्वर्भानुराधित तमोऽखिलभारतेऽस्मिन् ॥ ५२ ॥

ततस्तदुत्पीड़ितकान्यकुब्जतः
श्रीराममिश्रः सह भार्य्ययास्वजः ।
रिरक्षिषन् धर्म्ममुदस्रुसम्वलः
पूर्व्वं नवद्वीपमियाय काश्यपः ॥ ५३ ॥

तदात्मभूमाधवमिश्रदेहज-
गोपालपुत्रो गणपत्युदीरितः ।
तदात्मजस्तद्भयतः सनातनः
कोटालिपाड़ं पुनरागमत्ततः ॥ ५४ ॥

गुणार्णवो नाम गुणी तदात्मजः
पुरन्दराख्यं समजीजनत् सुतम् ।
मुण्डेष्वसौ पञ्चसु मुण्डमालिनीम्
प्रतिष्ठिपन्नीलग्रियापुरे निजे ॥ ५५ ॥

श्रीनाथो यादवानन्दो मधुसूदन एव च ।
वागीशश्चेति चत्वार आसन् पुरन्दरात्मजाः ॥ ५६ ॥

चूड़ामण्युपनामासीत् श्रीनाथो विबुधाग्रणीः ।
सुधीरो यादवानन्दो न्यायाचार्य्यैतुपाधिमान् ॥ ५७ ॥

अद्वैतसिद्धिप्रभृतिप्रणेता
संक्षेपशारीरकभाष्यकर्त्ता ।
योगी मनस्वी मधुसूदनः स
सरस्वतीं सन्धृतवानुपाधिम् ॥ ५८ ॥

गौरीदासो यादवानन्दसूनुः
गोविन्दाख्यः साग्निकस्तत्सुतोऽभूत् ।
सत्तेजस्वी सद्‌यशस्वी मनस्वी
तस्याप्यासन् सप्त पुत्राः पवित्राः ॥ ५९ ॥

तद्द्वितीयतनयो बलरामः तर्कभूषणमुपाधिमुपेतः ।
चारुधीरचतुरश्चतुरोऽसौ आत्मजानजनयन्निजरूपान् ॥ ६० ॥

लक्ष्मीनारायणो ज्येष्ठो हरिनारायणोऽपरः ।
पुरुषोत्तम इत्यन्यो रामदासश्च शेषजः ॥ ६१ ॥

विद्यालङ्काराभिधो रामदासः
तत्पुत्रोऽभूत् रुक्मिणीकान्तनामा ।
गौरीनाथो देहजस्तस्य जातः
राधानाथोऽप्यस्य सूनुः सुविज्ञः ॥ ६२ ॥

काशीचन्द्रस्तस्य पुत्रोऽतिविद्वान्
लोकख्यातो नाम वाचस्पतीति ।
भूरिज्ञानं यस्य वीक्ष्यातिसूक्ष्मम्
अन्यो व्यासोऽमन्यतान्यान्यलोकैः ॥ ६३ ॥

गङ्गाधरः प्रथमजः प्रथितस्तदीये
पुत्रत्रये बुधगणप्रवरः पिता मे ।
द्वात्रिंशवत्सरवयाः खलु पूर्णिमायां
चन्द्राग्निनागविधुमानशकाब्दमाघे ॥ ६४ ॥

कोटालिपाड़नगरीनशियानिवासी
मन्दात्मनापि कविलभ्ययशोऽभिलाषी ।
भूभृल्लिलङ्घयिषुपङ्गुसमानधर्म्मा
श्रीमानिदं रचितवान् हरिदासशर्म्मा ॥ ६५ ॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
विवाहो नाम षोड़शः सर्गः ॥ ० ॥

*
*

समाप्तमिदं रुक्मिणीहरणम् ॥ ० ॥

# शुद्धिपत्रम् ।

| अशुद्ध | शुद्ध | पृष्ठ | पङ्क्ति |
|---|---|---|---|
| सुधाम्वधे | सुधाम्वुधे | ३ | ११ |
| विरुरुधुरग्रतो | विरुरुधुरग्रतो | ९ | १० |
| कण्ठमसत्राः स्पृचन्तः | कण्ठमसत्रा विदन्तः | १३ | ६ |
| मञ्जं | मञ्जुं | १६ | १८ |
| ग्रिश्चयितं | ग्रिश्चयितुं | १८ | १३ |
| मचितन्तयत् | मचिन्तयत् | २९ | २ |
| नूंत | तनूं | ४० | २० |
| क्षितिपकं | क्षितिपैकं | ५५ | १८ |
| सखसुधांशु | सुखसुधांशु | ७० | २० |
| कञ्चकिना | कञ्चुकिना | ७५ | ६ |
| गृण्ह्न् | गृह्णन् | ८९ | १८. |
| तस्थ | तस्य | ९१ | २ |
| द्रुमृत | द्रुतम् | ११४ | १६ |
| सुवर्णललिका | सुवर्णलतिका | १२० | ११ |
| किलोपति | किलोपैति | १३१ | १९ |
| अनैकमैक्यं | अनेकमैक्यम् | १४१ | ४ |
| मञ्जलता | मञ्जुलता | १४५ | १९ |
| ग ण्ड | गण्डे | १४७ | १२ |
| ययुर्गह्णाणि | ययुर्गृह्णाणि | १४७ | २० |
| श्लेषः | श्लेषं | १५५ | १ |
| प्रत्यग्टण्ह्न् | प्रत्यग्टह्णन् | १५८ | ३ |
| पिग्रनयती | पिशुनयती | १७१ | ४ |
| द्वयभेव | द्वयमेव | १७४ | ९ |
| समेन चलद् | समेन च चलद् | १८२ | १५ |
| यदौ | ययौ | १८३ | ८ |
| निजां | निजान् | १८५ | ७ |
| निकार | निकाय | १९८ | १० |

# शुद्धिपत्रम् ।

| अशुद्धं | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| युगपदभुञ्जदुज्ज्वलां | निरविशदेकदोर्वरां | ७ | १ |
| चन्दिकान्तरा | चन्द्रिकान्तरा | ७ | ८ |
| दशन्तया: | दशत्या: | १४ | १० |
| हसन्तया | हसन्तया: | १४ | १५ |
| गुरुपदिष्टं | गुरूपदिष्टं | २१ | १ |
| जन्यं व्यधासुम्फलजन्यमेते विद्दिवमिं संविदधु: | समीकम् | २२ | ४ |
| वाजिं | वाहम् | २३ | ६ |
| आहुतिमासाद्य | घृताहुतिं प्राप्य | २६ | ३ |
| नारीव | नारी च | २६ | ११ |
| ऋते च राज्येन न | ऋते च राज्यान्नहि | २८ | ८ |
| समन्वकुर्व्वन्त | समन्ववर्त्तन्त | ३४ | १६ |
| परिलिप्सिरे प्रभुं | प्रभुमीषुरीहृशं | ४४ | १४ |
| धराधुरं | धराधुरां | ४६ | ११ |
| अभिपिप्राय | स्पृहयामास | ४७ | १४ |
| कमते च | यतते च | ४८ | १२ |
| कमते | यतते | ५७ | ४ |
| माक्रमन् | माव्रजन् | ८१ | ८ |
| निराख्यत | व्यपानयन् | १०० | ८ |